श्री हेमचन्द्राचार्यग्रन्थावली १७

ॐ अर्हम्

श्रीवीरचन्द्रसूरिशिष्यश्रीदेवसूरिविरचित

# ॥ जीवानुशासनम् ॥

स्वोपज्ञवृत्तिसहितम्

पत्तनस्थश्रीहेमचन्द्राचार्यसभायाः सेक्रेटरी—
शाह-जगजीवन उत्तमचन्द-लहेरुचन्द भोगीलालाभ्यां
प्रकाशितम्

श्रावकपण्डित-भगवानदास-वीरचन्द-प्रभुदासैश्च
संशोधितम् ॥

---

अमदावाद—घीकांटावाडीअन्तर्गत 'जैन एड्वोकेट' मुद्रणालये
वाडीलाल बापुलाल शाह इत्यनेन मुद्रितम्

---

वीर संवत् २४५४ विक्रम संवत् १९८४
सने १९२८
प्रथमावृत्ति प्रतयः ५००.

मूल्यम्—१-०-० रूप्यकमेकम् ।

# ॥ समर्पणम् ॥

क्रियोद्धारकपन्न्यासश्रीसत्यविजयगणिपट्टाचार्य-
श्रीगिरिनारतीर्थजीर्णोद्धारक-श्रीहेमचन्द्रा-
चार्यग्रन्थावलीस्थापनकृतोपदेश
आचार्यपदविभूषित श्री
श्री श्री १००८
श्री विजय-
नीतिसूरी-
श्वरेभ्यः
समर्पयन्ति ग्रन्थरत्नमिदम्

श्रीमदाचार्यवर्यनिरगुणगणावर्जितहृदया —
श्रीहेमचन्द्राचार्यसभाया
प्रधानाधिकारिण .

## ॥ प्रास्ताविकम् ॥

जीवानुशासनमिदं श्रीमन्त आचार्यवर्याः श्रीदेवसूरयो विरचयाम्बभूवुः । क्व कदा च सञातैस्तैः कस्मिन् समये विरचितमित्यादि सर्वं प्रान्तप्रदर्शितप्रशस्त्यैव स्वयमेव सुस्पष्टं ज्ञापितम् ।

श्रीजयसिंहदेवनरेश्वरे विद्यमाने सति श्रीअणहिल्लपाटकनगरमध्ये "दोहट्टी" नामश्रावकवसतिस्थितैः श्रीवीरचन्द्रसूरीणां शिष्यमात्रैः श्रीदेवसूरिभिर्बृहद्गच्छशिरोमणीनां श्रीमदुत्तराध्ययनलघुवृत्ति-वीरचरित रत्नचूडादिशास्त्रकर्तॄणां श्रीनेमिचन्द्रसूरीणामुपदेशादेकादशशतोपरिष्टाद्द्वाषष्टे सवत्सरे(विक्रम सवत्सर ११६२)नवम्यां तिथावादित्यवासरे त्रयोविंशत्यधिकत्रिशतगाथं प्रकरणमिदं निर्मितम् । सप्ततिगृहनिवासिभिः श्रीजिनदत्तसूरिभि संशोधितम् । अन्येषां च महेन्द्रसूरिप्रमुखाणां सूरिप्रवराणां सम्मतम् ।

अस्य वृत्तिरपि स्वोपज्ञैव । सा च तत्रैव नगरे तस्मिन्नेव राजनि गूर्जरमण्डल प्रशासति सति, तस्मिन्नेव वसतिस्थाने स्थितैर्दानरुचेः श्रेष्ठिजासकस्य वीरादिमातुश्च जिन साधुपूजनरतायाः श्राविकाया वसुन्धर्या उपष्टम्भात् श्रीदेवसूरिभिरेकेन मासेन सरस्वतीतोषतः कृता । श्रीनेमिचन्द्रसूरिभिश्च सशोधिता ।

अत एव ज्ञायते—" श्रीमुनिचन्द्रसूरीणां शिष्यप्रवराः समकालीना अपि श्रीमन्तो वादिदेवसूरय एतेभ्यो भिन्ना एव" इति

प्रकरणेऽस्मिन्नष्टाविंशदर्थाधिकारा जीवस्य भव्यात्मनोऽनुशासनरूपतया चर्चिता विद्यन्ते । अर्थात् स्वसमकालीनजैनसंघमध्ये प्रचलिताः केचिद् विवादग्रस्तविषयाः समालोचिताः । ग्रन्थहृदय तु साङ्गोपाङ्गग्रन्थावगाहनेनैव प्राप्स्यन्ति चर्चाचतुरा विद्वासः । तेन नेह प्रतन्यतेऽर्थविस्तार ।

विक्रमद्वादशशताब्दिमध्ये यदा श्रीमद्धेमचन्द्रप्रभुप्रभृतयोऽनेके महान्त आचार्यवर्या विहृतवन्तस्तत्कालीनप्रचलितचर्चाभिः जैनसंघपरिस्थितिज्ञापकमिदं प्रकरण समवबुद्ध्य किञ्चिदशुद्ध—अशुद्धतराभ्यामादर्शपुस्तकाभ्यां सशोध्य प्रकाशितम् । आदर्शदोषान्मतिमान्द्यात् मुद्रकप्रमादाद्वा याः काश्चिदशुद्धयस्सञातास्स्युः, ताः सशोध्या धीधनैः सिद्धान्तहृदयैः——

अणहिल्लपाटकपत्तनम्
स १९८४ फाल्गुन
कृष्णत्रयोदशी

इति प्रार्थयन्ति——

प० भगवानदास–प्रभुदास–वीरचन्द्राः

श्रीवीरस्य किमित्येवंविधं विशेषणद्वयं कृतम् ? सत्यम्, प्राधान्यख्यापनार्थम् । तथाहि–सर्वस्याप्यनुष्ठानस्य प्रत्युपेक्षणादेः सिकताकवलचर्वणप्रायस्य रागद्वेषजय एव फलमुपवर्ण्यते, स च भगवतो वर्द्धमानस्य माध्यस्थ्यभावनाप्रकर्षप्रवृत्त-शुक्लध्यानसामर्थ्यादविकलः सम्पन्नः, तत्सम्पत्तौ च सर्वोत्तमत्वादुपकारित्वाच्च भुवनत्रयस्य बन्धुर्जातः, अन्योऽपि यो मध्यस्थो भविष्यति स एवंविधः पारम्पर्येण भविष्यति, अत एव प्रकरणकारेणापि 'माध्यस्थ्यभावनया' इत्युक्तं, अत स्थितमित्थं विशेषणद्वयोपादानेन इति गाथार्थः ॥ १ ॥

साम्प्रतं 'जीवानुशासनं वक्ष्ये' इति यदुक्तं तत्सफलीकुर्वन् यादृग्विधानां सूरीणां वचस्सु चित्तं दातव्यमिति तेन द्वारेण जीवोपदेशं प्रपञ्चयन्नपायपरिहारगर्भं गाथाचतुष्टयमाह—

गम्भीरसिद्धसिद्धंतसिंधुसंपत्तपरमपाराण ।
सयलजणसम्मयाणं पवयणवच्छल्लजुत्ताण ॥ २ ॥

कुग्गहविवज्जियाणं अणिंदणिज्जाण परिणयवयाण ।
देसाइजाणयाणं अणुद्धयाणं गुणड्ढाण ॥ ३ ॥

संवेगभावियाणं अणुओगपराण परहियरयाण ।
उस्सग्गववायाणं विसयविभागम्मि दक्खाण ॥ ४ ॥

एवंविहसूरीणं वयणेसु ठेसु माणसं निच्चं ।
जइ भवमरणाओ निविण्णो रे तुमं जीव ॥ ५ ॥

व्याख्या—गम्भीरो मन्दमतिभिरलब्धमध्यः स चासौ सिद्धश्च प्रसिद्धः स चासौ सिद्धान्तश्च समयः स एव सिन्धुः समुद्रः तस्य सम्प्राप्तो लब्धः पारः पर्यन्तो यैस्ते गम्भीरसिद्धसिद्धान्तसिन्धुसम्प्राप्तपरमपारास्तेषाम् । सकलाः समस्ता ते च ते जनाश्च गीतार्थाचार्यादिलोकाः, तथा सम्मता अभिप्रेतास्तेषाम् । प्रवचनं संघः, तस्य वात्सल्यमनुकूलता तस्मिन् युक्ताः सबद्धास्तेषाम् ॥ २ ॥ कुग्रहः स्वाभिप्रायेण दुष्टाभिनिवेशः तेन विवर्जिता रहितास्तेषाम् । अनिन्दनीयानां—गीतार्थादिजनादृष्याणाम् । परिणतवयसां वयःस्थविराणाम् । [illegible] क्षेत्रकालादिपरिज्ञानवताम् । अनुद्धतानां गर्वनिवर्जितानाम् । गुणा [illegible] तैराढ्या, ईश्वरास्तेषाम् ॥ ३ ॥ संवेगभावितानां–मोक्षाभिलाषिणाम् ।

अनुयोगपराणां सिद्धान्तव्याख्याननिष्ठानाम्। परहितरतानां-परे आत्मव्यतिरिक्ता जीवास्तेषां हितं सम्यक्त्वादिगुणाधानं तत्र रताश्चासक्तास्तेषाम्। उस्सग्ग-ववायाणंति " बहुवयणेण दुवयणं " इति प्राकृतलक्षणनिर्देशाद् उत्सर्गा-पवादयोः सामान्यविशेषोक्तलक्षणयोर्विषयविभागे—गोचरविच्छित्तौ छेका-नाम्। एतेषु च विशेषणेषु परस्परं कथंचिदन्तर्भावेऽपि न पौनरुक्त्याशङ्का विधेया, प्राधान्यख्यापनार्थत्वादेतदुपन्यासस्य। एवंविधसूरीणां उक्तप्रकारा-चार्याणां वचनेषु भणितिषु, अनुस्वारश्चात्र " नीयाणोयमयूया य आणिया-एए विंदुदुभावा। " इति प्राकृतलक्षणप्रभवः, देहि प्रयच्छ मानसं—चित्तं नित्यं सर्वदा, यदीति हृदयाभिप्रायविज्ञप्त्यर्थः, भवसमरणात्—संसारसंसृतेः निर्विण्णः खिन्नः ' रे ' इत्यामन्त्रणद्योतनार्थः, त्वं भवान् जीव-आत्मन् [१]। अयमभिप्रायः—'इत्थं भवति इत्थं न भवति, एवं क्रियते एवं न क्रियते, इदं वस्तु ' इत्यादि वस्तुविचारापेक्षयवेदमुपदिश्यते, सामान्यदेशना तु किंचित्पूर्वो-क्तगुणरहितेभ्योऽपि श्रोतव्या। इति गाथाचतुष्टयार्थः।

ननु किमन्यथापि केचिद् व्याचक्षते ? येनेत्थमुपदिश्यते। सत्यम्, ' व्याचक्षते ' इत्यावेदयन्, यदर्थं च जानन्तोऽप्यगणितापाया यादृशाः स्वमत्येति कथयंश्च गाथात्रयमाह—

> जं दूसमआणुभावाओ एगे अलसा सधम्मकज्जेसु।
> अन्ने तहासविकत्थणाए लोया ण सावेक्खा ॥ ६ ॥
> तह पल्लविंति धम्मं जह नियपक्खस्स होइ परपुट्ठी।
> जाणंति णेय मूढा अत्ताणं वंचिमो एव ॥ ७ ॥
> जह मरणमुवगयाणं जीवाणिवाइ निसुणिऊणावि।
> अवगण्णियभवदुक्खा किंव सचपक्खया अम्हे ॥ ८ ॥

यद्–यस्माद् दुःषमानुभावात्–समयोक्तलक्षणकालविशेषमाहात्म्यात् एके केचन अलसाः–मन्दोत्साहाः स्वधर्मकार्येषु प्रत्युपेक्षणादिव्यापारेषु, अन्ये

---

१ नीयौ ?गामम्नौ माखेना एतो बिन्दु–द्विर्भावा।–

एतौ अनुस्वारद्विर्भावौ नियमानां लोप नीतौ–प्राप्तौ भवत अविद्यमानौ तहि आनीतौ भवतः।

अपरे तद्दोषविकत्थनया अस्यापराधपुनःपुनर्भणनेन लोकानां श्रावकाणां सापेक्षा' तदभिप्रायानुवर्तकाः ॥ ६ ॥ तथा तेन प्रकारेण प्रज्ञापयन्ति कथ यन्ति ' धर्म्म ' श्रुतचारित्रलक्षणं ' यथा ' येन प्रकारेण 'निजपक्षस्य' स्वमतस्य 'भवति' जायते 'परा' प्रधाना हस्तत्र चात्र ' गाढ ऊच समाणा " इति प्राकृतप्रभवम् ' पुट्ठि ' पोषः । ' जानन्ति ' अवबुध्यन्ते ' नैव ' न च प्रहा' परमार्थतोऽथ ' आत्मानं ' स्वं यश्चयामो विप्रतारयाम. ' एवं ' अमुना प्रकारेण ॥ ७ ॥ यथा शरणमुपगतानां जीवानामित्यादि निष्ठु त्याऽपि न केवलमश्रुत्वा इत्यपेरर्थ' । आदिग्रहणादेव दृश्य — "निर्किंयई मिरे जोउ एव आयरिओ वि हु उस्सुत्त पन्नविंतो उ" सुगमं च । 'अपकर्णितभवदण्डा' अवधीरितससारभया , किलेति आत्मरुचिसमूचकः' ' सत्यप्ररूपका' ' अवितथदेशका ' अम्हे 'त्ति वयम् । इति गाथात्रयार्थ' ॥ ८ ॥

यदि ते एवंविधास्तर्हि किं कर्त्तव्यम् ? इत्याह—

मा देसु तेसु मणयपि माणस माणमुव्वहतेसु ।
धम्मरयपुव्वसूरीण मग्गभंगं कुणतेसु ॥ ९ ॥

' मा ' इति निषेधे ' देहि ' प्रयच्छ ' तेषु ' अभेदोपचारात्तद्वचनेषु, ' मनागपि ' स्तोकमपि ' मानसं ' अन्तःकरणं, मान गर्वं ' उद्वहत्सु ' धारयमाणेषु, ' धर्मरतपूर्वसूरीणां ' उद्युक्तविहारिचिरन्तनाचार्याणां ' मार्गभङ्गं पदवीलोपं ' कुर्वत्सु ' विदधत्सु । ' शीतलविहारिसमाचीर्णमार्गभङ्गेऽपि न दोष ' इत्यावेदनार्थं ' धर्म्मरत ' इति विशेषणम् । अयमभिप्राय —यदिकमप्यत्र प्रकरणे प्रतिपादयिष्यति प्रकरणकारस्तत्सर्वं धर्म्मरतपूर्वाचार्यैरनुष्ठितं किंचित्करणतः किंचित्कथनतः किंचिच्चानुमतेरिति मत्वा मोहं हित्वा स्वाग्रहं विहाय आदरं विधाय धर्मार्थिभिरत्रोक्तं तथेति प्रतिपत्तव्यम् इति गाथार्थः ॥ ९ ॥

साम्प्रतं यदुक्तं ' धर्म्मरतपूर्वाचार्यमार्गभङ्गं कुर्वत्सु ' इति दर्शयन्निदमेकीयमतं गाथया प्राह । अयं च सम्बन्धः सर्वेष्वप्यधिकारेषु सम्बन्धनीयः सामान्येन, अतः प्रत्यधिकारं तत्र भणिष्यामः । आद्याधिकारद्वयस्य तु विशेषेण ।न सम्यक्त्वनिर्मलीकरणार्थम् । सर्वज्ञमतिकृति' साधु', यथा त्वस्थि-

ताकरणे हि मालिन्यादि सम्यक्त्वस्योपजायते, तच्च कुश्रवणतो भवति, अतस्त-द्दर्शयन् जिनमतिकृतिविषय तावदाह—

दव्वत्थउत्ति केइ बिंबपइट्ठं भणंति सड्ढस्स ।
तह कप्पे भणियमिणं सत्ति पइट्ठवणवयणाओ ॥ १० ॥

द्रव्य—वासकुसुमधूपकषायमृत्तिकानेत्रोन्मिलनकारिलक्षण तत्प्रधानस्तवो द्रव्यस्तवः भावप्रधानत्वान्निर्देशस्य ततो द्रव्यस्तवत्वात्कारणात्, इति-र्हेतौ, स च प्रदर्शित एव । केचन एके ' बिम्बप्रतिष्ठा ' सर्वज्ञप्रतिनिधेस्तद्गुणा-ध्यारोपलक्षणा भणन्ति जल्पन्ति श्राद्धस्य श्रावकस्य । अथ तेषामाशयः—यति-धर्मो हि भावस्तवप्रधान', स च प्रतिष्ठाया क्रियमाणाया पूर्वोक्तद्रव्यव्यापार-णतो न सम्यग् जाघटीति । तथा पर कारण—' कल्पे ' छेदग्रन्थविशेषे ' भणितं ' प्रतिपादितं ' इद ' प्रतिष्ठाविधानम् तद्धि ' प्रतिष्ठापनवचनात् ' " सावओ कोई पढम जिणपडिमाए पइट्ठवण करेइ " त्ति भणनात् श्रावकः कश्चित्प्रथममाद्य जिनप्रतिमाया॰ जिनमूर्त्तेः प्रतिष्ठापन प्रतिष्ठा करोति विदधाति । गाथाया प्रथम करोत्यादिशब्दानुपादान छन्दोवशात्र कृत सूचनाच्च सूत्रस्येति लभ्यते । अतः स्थितमेतत् कारणद्वयादुक्तलक्षणात् श्रावक एव प्रतिष्ठा करोति-न साधुरिति पूर्वपक्षार्थः ॥ १० ॥

साम्प्रत प्रथमपक्षस्य परिहार दातुकामस्तदनुष्ठानेनैव चोत्तर गाथार्द्धेनाह—

सयममिलाणं दामं खिवंति सड्ढीण खंधदेसंमि ।

स्वयं—आत्मना ' अम्लाना ' सार्द्रां, ' दाम ' माला क्षिपन्ति ' आरो-पयन्ति ' श्राद्धीना ' श्राविकाणा ' स्कन्धदेशे ' ग्रीवायाम् । अयमभिप्रायः— यदि द्रव्यस्तवभीतेर्भवद्भि॰ प्रतिष्ठा न क्रियते किमित्युपधानविधौ मालारोपण विधीयते ? अम्लानादित्वेनास्याऽपि साध्वनुचितद्रव्यस्तवत्वाद् इदमपि कर्तुं न युज्यते इति ।

एवमुक्तः परः स्वमतस्थित्यर्थं कदाचिद्वदिष्यत्येवं तत्तृतीयपादेनाह—

अह सत्थे भणियमिणंति ।

' अथ ' इत्याचार्यवचनानन्तर्यार्थः, ' शास्त्रे ' महानिशीथाख्ये ' भणित '

उक्त, 'इदं' मालारोपणविधानम्, इतिर्त्तो, अतो विधीयते इति अस्याऽपि न्यायत उत्तर चरमपादेनाह—

तत्थिमात्ति वत्तव्वा ॥ ११ ॥

'तत्र' शास्त्रभणने 'इमा' त्ति इय वक्ष्यमाणा युक्ति' अवितथभणितिः, 'वक्तव्या' वाच्या इति गाथार्थ ॥ १० ॥

तामेवाह—

सत्थपि वहुमय ते रइय जं पुव्वसूरिपवरेहिं ।
ताणायरण नणु मूढ होइ गिज्झ विसेसेण ॥ १२ ॥

शास्त्रमेव महानिशीथादिलक्षण, अपिशब्द एवकारार्थ, स च दर्शित एव, 'बहुमत' अतीवाभीष्ट 'ते' तव 'रचित दृब्ध यत् 'पूर्वसूरिप्रवरैः' चिरन्तनाचार्यप्रधानै, 'तेषा' आचार्यवृन्दारकाणा, 'आचरण' चेष्टित नन्वित्यक्षमाया 'मूढ' मन्दमते! 'भवति' 'जायते, 'ग्राह्य' स्वीकर्त्तव्य 'विशेषेण आदरेण । इदमत्र तत्त्वम्—यदि तव पूर्वाचार्यवचन शास्त्रस्थित प्रमाण ततस्तच्चेष्टित विशेषत कर्तुं युज्यते, न हि ते अनुचित कुर्वन्ति । अत्र वहुवचनमप्रमेऽपि यदेकवचनेन निगमन कृत "तद्वहादेशोऽपि एकादेश" इति वचनाद्दुष्ट मन्तव्य, एवमन्यत्राऽपि इति गाथार्थ ॥ ११ ॥

अत्र यदि परो ब्रूयात् न मम तदाचरित प्रमाण, अतस्तत्साधनाथ गाथार्द्धमाह—

असढेहि समाइन्न इचाइवयणओ तय सिद्ध ।

अशठै—अमायिभि समाचीर्ण आसेवित 'इत्यादिवचनत ' एव प्रभृतिभणनात् 'तकत्' पूर्वाचार्यानुष्ठित 'सिद्ध' प्रतिष्ठितम् । आदिग्रहणादेव दृश्य—ज कत्थ य केणई असावज्ज न निवारियमन्नेहिं वहुमणुमयमेव-वायरिय' । सुगम च । एतच्च पराभिप्रायमभ्युपगम्यास्माभिरुक्तम् । तत्त्वतस्तु द्रव्यस्तव एवैष विम्बप्रतिष्ठा न भवति, निरवद्याचार्यमन्त्राद्यनुष्ठानपूर्वक गुणा-ध्यारोपणेन भावस्तवत्त्वादस्या । किंच-आचार्यप्रतिष्ठाकरणे श्रीमदुमास्वा-तिवाचक-समुद्रसूरि—हरिभद्राचार्यादिरचिता प्रतिष्ठाकल्पा दृश्यन्ते, श्रावक

प्रतिष्ठाकरणविधौ तु न किमपि दृश्यते विधानं, ततः कथं ते तां कुर्वन्तु ? मा वा भवतु, यदि श्रावकेण कुत्रचित्कदापि च कृता भवति भवद्वचनात् पूर्वं प्रतिष्ठा, ततो युज्यतेदमपि वक्तुम् । यदप्युच्यते अष्टापदजैनालये कृता भविष्यति तदपि युक्तं स्यात् यदि साधुव्युज्झिता निष्पन्ना तत्स्यात् । किंच–आवश्यकचूर्ण्यां तत्करणविधिः सर्वं प्रतिपादितः न तु साधुना श्रावकेण वा प्रतिष्ठा कृता इत्युक्तम् । यच्च सम्प्रतिराजनिर्मापितानार्यदेशचैत्येषु साम्प्रतान् कृता भविष्यति, तत्रापि पश्चाद् गतैः साधुभिः प्रतिष्ठा कृता भविष्यति तदपि वक्तुं शक्यते, तस्मात् किमेभिः कुशकाशावलम्बनैरिति

द्वितीयविकल्पशोधनायोत्तरार्द्धमाह—

कप्पमि वि जं भणियं तं अणुजाणाहिगारंमि ॥ १२ ॥

व्याख्या—कल्पेपि, न केवलं प्रथमविकल्पेन तव न किंचित्समीहितं जातं, द्वितीयेनापि नेत्यपिशब्दार्थः । यद्वचनं भणितं तद्वचनमनुयानाधिकारे–रथस्य पृष्ठतोऽनुव्रजने, न प्रतिष्ठाधिकारे इति गाथार्थः

अस्यैवार्थस्य सुखावगमार्थं संबन्धपूर्वकमिदानीं कल्पोक्तं तदक्षरैर्लिख्यते । तत्र रथयात्रादौ प्रभूतजनसंसर्गाकुले सुसाधुभिर्न प्रवेष्टव्यं उत्सर्गतः । किं कारणं ? ' गच्छता मार्गे ईर्याशुद्धिर्न भवति भक्तादिशुद्धिश्च न भवति, भाषाना च तत्स्थाने श्रावकादिलोकैस्त्वरुद्धानि गृहाणि भवन्ति, ततो देवगृहेऽपि स्थातव्यं स्यात्, तथा स्त्र्यादिसंघट्टनतो रागद्वेषौ स्याताम् ' एवमाद्यर्थप्रतिपादिका विस्तरेण द्वारगाथा प्रतिपादिता, सा चात्र ग्रन्थविस्तरभयान्न लिखिता । " इमेहिं पुण कारणे हिं पविसियव्वं, जइ ण पविसइ तो चउगुरुयं पच्छित्तं । कानि च कारणानि ? चेइयगाहा–

" चेइयपूया रायाणिमंतण सन्निवाइंखवगधम्मकही ।
संकियपत्तपभावणपवित्तिकज्जा य उड्डाहो ॥ ( दारगाहा )

चेइय(पूया)रायानिमंतण च दोवि दारे एगट्ठे वक्खाणेइ—पविसंते इमे गुणा भवंति । सद्धागाहा—

---

१ विधानमिति शेषः ।

सद्धावुड्ढी रन्नो पूयाए थिरत्तण पभावणया ।
पडिवाओ य अणत्थे अत्था य कया हवइ तित्थे ॥

रन्नो सद्धा वड्ढिया भवइ । चेइयपूया थिरीकया भवइ, तीर्थं प्रभावितम्, ये चार्हच्छासनप्रत्यनीका बहुजने दोषान् ख्यापयन्ति एवंविधानामनर्थानां प्रतिघातः कृतो भवति । आस्था नाम स्वपक्षपरपक्षाणां अर्हत्कृते तीर्थे बहुमानत्वमुत्पादितं भवति । निमंतण ।

सन्निहित्ति सावगा वा एए दोवि दारे एगट्ठे वक्खाणेइ, एमेवय गाहा—

" एमेव य सन्नीण वि जिणाण पडिमासु पढमपट्ठवणे ।
मा परवाई विग्घ करेज्ज वाई तओ विसइ ॥ "

कठ्या । सावओ कोइ पढम जिणपडिमाए पइट्ठवण करेइ । वाइणा य पविट्ठेण इमे गुणा—परवाइनिग्गह दट्ठु नय 'धम्माण' गाहा—

नयधम्माण थिरत्त पभावणा सासणे अ बहुमाणो ।
अभिगच्छंति य विउसा अविग्घपूयाए सेयाए ॥

कठ्या । सेयाएत्ति । अविग्घेण पूआए कयाए सपक्खस्स इहलोए पर- लोए य सेयं । इह लोके असिवाइउवद्दवा न हुंति, परलोए तित्थगरपूयाए दरिसणविसुद्धी निव्वत्तिया भवइ ।

खवगत्ति दार । इयाणि 'आयावेंति' गाहा—

आयावेंति तवस्सी भावणया परप्पवाइण ।
जप्परिसाविं महिम उवेंति कारिंति सड्ढा य ॥

कठ्या । कारिंति सड्ढायत्ति । जइपरिसा नवम्मिणो उवेंति, तओ सावगा महिमं कारिंति कारावेंति य ।

इयाणिं धम्मकहित्ति दार । ' आयपर ' गाहा—

आयपरसमुत्तारो तित्थविवुड्ढी य होइ कहयते ।
अन्नोन्नाभिगमेण य पूयाथिरया सवहमाणो ॥

कण्ठ्या । -

इयाणिं सक्कियत्ति दार । निस्संकियगाहा--

निस्संकिय च काहिइ उभये ज सक्किय च सुअहरेहिं ॥ ( दार )

पत्तदागमियाणि--

अन्वोच्छिउत्तिकर वा लब्भइ पत्त दुपक्खाओ । ( दार )

पभावणादारमियाणिं—

जाइ-कुल-रुव-धण-बलसपन्ना इड्ढिमंत निस्सका ।
जयणाजुत्ता य जई समेच्च तित्थ पभाविंति ॥

उक्तं च—

प्रावचनी धर्मकथी वादी नैमित्तिकस्तपस्वी च ।
जिनवचनरतश्च कविः प्रवचनमुद्भावयन्त्येते ॥

जो जेण गुणेण रहिओ जेण विणा वा न सिज्झए जंतू ।
सो तेण धम्मकज्जे मन्नत्थाम न होवेइ ॥ ( दार )

इयाणिं पविंत्तिदार—

साहम्मियागयाण खेमसिवाण च लब्भइ पवित्तिं
गच्छति जहिं ताइ होहिंति नवावि अन्नउ वा ॥ ( दार )

इयाणिं कज्जदार उद्दाहदारे-

कुल्माईणं कज्जाइ साहिस्स लिंगिणो य मासिस्स ।
ज लोगविरुद्धाइ करिंति लोगुत्तराइ च

समाप्ता द्वारगाथा ।

अत्र सन्निद्वारेणैव प्रयोजन तदर्थव्याख्यानायाह—

तत्थ य पढम ठाण पढमं पासण भणांति समयविऊ ।
पुव्व पट्टियाण रहंमि अणुयाण अहिगारा ॥१३॥

व्याख्या– ' तत्र सन्निद्वारव्याख्यान, च पुनरर्थे , प्रथम स्थापन प्रथम न्याससमारोपणमिति यावत्, ' भणन्ति ' जल्पन्ति ' समयविदः ' सिद्धान्तज्ञ. । ' पूर्वं ' प्रथम स्व न्यसन ? ' स्थे ' जिनस्यन्दने अनुयानाधिकारात् उक्तल- क्षणाद्धेतोरिति गाथार्थ ।

स्यान्मत–कथमिद ज्ञायते ? यदुतास्यायमर्थो न पुनर्मयोक्त., अत आह—

जइ पुण पइट्ठअत्थो न्हवेज्ज तो महुरणयरिगेहेसु ।

मगलपडिमाणपि हु तुम्ह मया पावइ पइट्ठा ॥

व्याख्या–यदि पुनरिति पराभिप्रायाभ्यासनार्थं., प्रतिष्ठालक्षणोऽर्थोऽभि धेयो ' भवेत् ' जायेत ततो ' मथुरानगरीगेहेषु ' मथुराभिधानपत्तनसदनेषु मङ्गलप्रतिमानामपि, न केवल तत्र भवनानामित्यपिशब्दार्थः, हु पूरणे, ' युष्माक ' भवता ' मताद् अभिप्रायात् ' प्राप्नोति ' भवति प्रतिष्ठा भवत्सम- मता । अत्राप्यस्य शब्दस्य विद्यमानत्वामित्यभिप्राय । मङ्गलप्रतिमाश्चेह ता उच्यन्ते, यासामकरणे गृहस्योपद्रवादिक भवति । यथाऽत्र केनापि गृहद्वार स्योपरि विनायकमूर्तिर्वास्तुविशेषोपदेशात् क्रियते, तथा मथुराया गृहे गृहे पा- र्श्वनाथजिनप्रतिमा ब्राह्मणादिभिरपि गृहद्वारस्योपरि कार्यन्ते, यदि न क्रियन्ते ततो गृहाणा पतनादिक भवति । तथा च तत्रैव कल्पे भणित मङ्गलचैत्यप्ररू- पणावसरे–"महुराए नयरीए जिणपडिमाओ गिहे गिहे पइट्ठविज्जति । " प्रति- ष्ठाप्यन्ते न्यस्यन्ते इति भवतोऽपि सम्मतम्, न हि तासा विधिवाद्भिरितत्र मम समत प्रतिष्ठाविधान क्रियते । एतन्निराकृत–अस्य शब्दस्यात्र न्यसनमेव वाच्य- म् । किंच–प्रथमशब्दस्य नैरर्थक्य प्राप्नोति, न होकस्या एव प्रतिमाया द्वितीया प्रतिष्ठा क्रियत, येन तद्व्युदासार्थं प्रथमशब्दोपादान क्रियते । अस्म- त्पक्षे तु प्रथम रथारोपण सम्भवत्येव । पूज्यास्तु व्याचक्षत–अत्र करोतिभण नेऽपि कारापण दृश्य, ततश्च साधुभ्य महागान श्रावक प्रतिष्ठा कारयती- त्यर्थ । यथा उमास्वातिवाचकोक्ताऽऽर्यायामस्या–

" जिनभवन जिनबिम्ब जिनपूजा जिनमत च य. कुर्यात् ।
तस्य नरामरशिवसुखफलानि करपल्लवस्थानि ॥ "

अत्र कुर्यादित्युक्तेऽपि कारयेदिति द्रष्टव्य, न हि श्राद्धः स्वय जिनमन्दिरं तत्प्रतिमा वा करोति, एवमत्रापि । प्रथमशब्दसाफल्य त्वेवं कथयन्ति–तेन श्रावकेण प्रथममेव प्रतिमा कारिता, निशीथेऽपि कारापणस्थाने करणशब्दप्रयोग' स्थाने स्थाने प्रतिपादित एवेति गाथार्थः ॥

एव भणितऽप्यप्रतिपद्यमानाना सापाय तेषा दूषणमाह—

नह कासहद–सिरिभिल्लमाल–सचउरबिंबमाईण ।
अपमाणय कुणतेहि नेहि अप्पा भवे खित्तो ॥ १४ ॥

तथेति दूषणान्तरसमुच्चयार्थः । काशहद–श्रीभिल्लमाल–सत्यपुरबिम्बादीनाम् । तत्र काशहदनगरमासापल्लिपत्तनादरवर्त्ति, श्रीमाल साम्प्रत यद् भिल्लमालमिति रूढ, सत्यपुर म्लेच्छराजबलभरदर्पभञ्जनलब्धमाहात्म्यश्रीमहावीरसदनमण्डित, तत एषा द्वन्द्वस्तेषु बिम्बादि सर्वेषु प्रतिमा, आदिशब्दात् शत्रुञ्जयगिरिमहातीर्थ–अश्वावबोधमहातीर्थ मोढेरपुर–मथुरागिरि( नार ) अर्बुदगिरि–स्तम्भनस्थादिपरिग्रहस्तासाम् । एतद्धि हृदय–एता' साधुभिः प्रतिमाः प्रतिष्ठिता। । तथा च काशहदीयजिनस्तोत्रे पठ्यते—

" नमिविनमिकुलान्वयिभिर्विद्याधरनाथकालिकाचार्यः ।
काशहदशखनगरे प्रतिष्ठितो जयति जिनवृषभ ॥ "

शेषास्तु सर्वजनप्रतीता ' अप्रमाणता ' आचार्यप्रतिष्ठितत्वेन ' अविधिप्रतिमा एताः ' इति प्ररूपणता मुग्धजनभावसारतदर्चनौचित्यलक्षणा कुर्वद्भिर्विदग्धैस्तै श्रावकप्रतिमाप्रतिष्ठाप्रतिपादनपरैरात्मा जीवो ' भवे ' संसारे ' क्षिप्तः ' प्रयुक्त इति गाथार्थः ।

ननु किमेतावता एतावान् दण्डो भवति ? ' भवत्येव ' इत्यस्यार्थस्य साधनाय सिद्धान्तोक्तमाह—

कप्पुत्तमेवमाइ अवि पडिमासुवि तिलोयमहियाणं ।
पडिरूवमकुव्वतो पावइ पारचियं ठाणं ॥ १५ ॥

व्याख्या—कल्पस्यच्छेदग्रन्थस्योक्त सवादक वचन, परमेतावान् विशेषः– तत्र ' अन्न च ' इत्यादौ गाथाया पठ्यते तीर्थकराशातनाधिकारे ।

'एवमादि' पूर्वोक्तप्रकारम् । अपीति सम्भावने, संभवत्येवैतत् 'प्रतिमास्वपि' जिनमूर्तिष्वपि, न केवलं साक्षाद्भावतीर्थकृतामित्यपिशब्दार्थः । 'अविधि' यथोक्ताशातनाभिर्जनपदूर्वकमविधानं 'प्राप्नोति' लभते 'पायच्छित्त' प्रायश्चित्तं लिङ्गादिकम्, ठाणमिति । तिष्ठन्त्यस्मिन्निति कर्माणि प्रायश्चित्ताचरणत इति स्थानं कर्माधारः कर्मभिश्च भवः, अतःसिद्धमि-'संसारे अप्पा भवे खिनो'त्ति । किंच-आचाराङ्गनिर्युक्त्या दर्शनविशुद्धिं श्रुतकेवलिना भणित-चिरन्तनचैत्यवन्दनं दर्शनशुद्धिर्भवति सद्दृष्टिनां यदर-

तित्थयराण भयवओ पवयणपावयणिअइ सड्ढीणं ।
अभिगमण-नमण-दरिसण-कित्तण-मसणय संथुणण ॥ १ ॥
जम्माभिसेय-निक्खमण-चरण-नाणुप्पाया य णिव्वाणे ।
दियलोयभवणमन्दिर-नंदिसर-भोमणगरेसु ॥ २ ॥
अट्ठावयमुज्जंते गयग्गपयये य धम्मचक्के य ।
पासरहावत्त चिय चमरुप्पाय च वन्दामि ॥ ३ ॥
गणियनिमित्त जुत्तीस दिट्ठी अ विनइ इम नाण ।
इय एगतमणुगया पुण पत्रगा इमे अत्था ॥ ४ ॥
गुणमाहप्प इसिनामकित्तण सुरनरिंदपूया य ।
पोराणचेइयाण य इय एसा दंसणे होइ ॥ ५ ॥

चिरन्तनचैत्यानि च पूजयतो दर्शनशुद्धिर्भवति, न केवलं पूर्वगाथोक्तं कुर्वतः, अतः स्थितमिह चिरन्तनचैत्यानामवर्णवादादि न कार्यम् ।

ननु किमेव बहुश्रुतवचनस-दर्शनवणेऽपि ते एव नूतनं प्रतिपादयन्ति ! उच्यते, विकल्पार्थम् । तथा चोक्तं व्यवहारे यथाच्छन्दलक्षणं कथयता-"सच्छन्दमई विगप्पिय काउ त पयवेद तओ तस्स गुणेण विगईओ लहइ, सायपडिवद्धो सुइ अच्छइ, तेण य सच्छन्दकप्पिएण पवविएण समाहिओ समाणो पूइओ य तिहि इड्ढिमाइगारवेहि मज्जइ ।' इत्यादि । एतन्न्यायेनेष्वप्यधिकांशु यथासम्भवमायोज्यमिति गाथार्थः ।

इदानीं पूर्वोक्तार्थनिगमनगर्भं जीवोपदेशमाह—

जह समयण्णू जपंति मुणसु तह जीव ! समयवयणाइं
पुव्वुत्तदोसजालस्स जेण नो भायणं होसि ॥ १६ ॥

व्याख्या–'यथा' येन प्रकारेण 'समयज्ञाः' सिद्धान्तविदो 'जल्पन्ति' वदन्ति 'मुणसु' जानीहि 'तथा' तेन प्रकारेण, न पुनः स्वमत्यवबोधेन, 'जीव !' आत्मन् ! 'समयवचनानि' सिद्धान्तवाक्यानि। तत् 'पूर्वोक्तदोषजालस्य' भवपातादिदूषणव्रातस्य येन कारणेन 'नो' नैव भाजनं पात्रं भवसि जायसे इति गाथार्थः।

समाप्तो निम्नप्रतिष्ठावर्णनलक्षणप्रथमाधिकारः।

पूर्वोक्तसम्बन्धमिदानीं द्वितीयमधिकारं सपूर्वपक्षोत्तरं गाथात्रयेणाह—

उस्सग्गतरलियमई करिंति नो कारविंति वंदणयं।
पासत्थाईयाणं तं न जओ कप्पमाईसु ॥ १७ ॥
कारणजाए जाए पासत्थाईण वंदणं कुज्जा।
अह नो करेइ साहू इमं तओ होइ पच्छित्तं ॥ १८ ॥
भणियं सुद्धजईणं एय जे उण हवंति पासत्था।
एएहिं गुणेहिं तओ नो जुज्जइ ताणिमं भणिउं ॥ १९ ॥

उत्सर्गेण–सामान्योक्तविधिना—
पासत्थाई वंदमाणस्स नेव कित्ती न निज्जरा होइ।
कायकिलेसं एमेव कुणइ तह कम्मबंधं च ॥"

इत्येवमादिना तरङ्गिताऽप्रत्यालीभूता मतिर्बुद्धिर्येषां ते उत्सर्गतरलितमतयः 'कुर्वन्ति' विदधति स्वयं, 'नो' इति निषेधे नोशब्दस्य डमरुकमणिन्यायेनोभयत्र सम्बन्धात् न च कारयन्त्यन्यस्मात् आत्मव्यतिरिक्तात् वन्दनकं थोभवन्दनादिकम्। केषाम् ? इत्याह–पार्श्वस्थादीनां सिद्धान्तोक्तलक्षणानाम्, आदिशब्दादवसन्नादिग्रहः, 'तत्' तरलितमतिकरणादिकं नेति निषेधे। 'यतो' यस्मात्कारणात् कल्पादिच्छेदग्रन्थादिषु आदिशब्दादावश्यकचूर्णि–तद्वृत्ति–निशीथादिपरिग्रहः, 'कारणजाते' प्रयोजनप्रकारे 'जाते' सम्पन्ने पार्श्वस्थादीनां वन्दनमुक्तरूपं 'कुर्याद्' विदध्यात्।

अथेति विकल्पार्थे , नो इति निषेधे, करोति विदधाति साधुर्यति. ' इमं ' ति इदमुक्तस्वरूप, ततस्तस्मात्कारणाद्भवति जायते ' प्रायश्चित ' चारित्ररत्नमालिन्यकृ करोति । ' भणित ' प्रतिपादित ' शुद्धयतीना ' निष्कलङ्कचारित्रिणा ' एय ' ति एतत्पूर्वोक्तम् । तथाहि–तत्र निशीथोक्त सविशेषणमिति कृत्वा तदेवादौ दर्श्यते—

" मुक्कधुरा सपागडसेवी चरणकरणपरिहीणे ।
लिंगावसेसमेत्ते ज किरइ तारिस वोच्छ ॥ १ ॥
वायाए णमोकारो हत्थुस्सेहो य सीसणमण च ।
सपुच्छणत्थण थोभवदण वदण वावि ॥ २ ॥

तत्र ' वायाए नमोक्कार ' इत्यादीनि थोभवन्दनपर्यन्तानि सुबोधानीति कृत्वा न वितन्यन्ते । परमेतावान् विशेष –तत्र ' सिद्धपरे उग्गसहावे वा हत्थुस्सेहो ' इत्यादि सर्वेषु पदेषु योज्यम् । अन्यद्द्वारस्येय पातना–निशीथे पुरिसविसेस जाणिउ वारसावत्तपि वदण देइ । तय वदणविसेसकारणा इमे परियागगाहा—

परियागपरिसपुरिस खेत्त काल च आगम नाऊ ।
कारणजाए जाए जहारिह जस्स ज जोग्ग ॥ १ ॥
बभचेर अभग्ग चिरोसिओ दीहपरियाओ ।
सगुत्तरगुणेसु सीयइ परिमा परिवारो ॥ "

से मज्झमविणीओ मुलुत्तरगुणउज्जुओ पुरिसो रायाइ निक्खिओ बहु सम्मओ वा पवयणुब्भावगो वा खेत्त पासत्थाइभाविय तत्थ तयाणुगएहिं वसियव्व । ओमकाले जोगत्थ उप्पायण करेइ तस्स जहारिहो सक्कारो कायव्वो । आगमो से सुय अत्थि अत्थ वा पच्छवेइ ॥ " चारित्रगुणान् ज्ञापयतीत्यर्थ , कारण कुलाइगा, जायसद्दो सम्यग्वाची, बीओ जायसद्दो प्रकारवाची, तस्स पुरिसस्स ज वदण अरह त कायव्व । चोयग आह–जोगगहण णिरत्थय, पुणरुत्त वा । आयरिओ आह–न निरत्थग, अन्नपि कुणित्त अब्भुट्ठाण निस्सामण भत्तवत्थाइपयाण तपि सव्व कायव्व । एय जोगगहणा गहिय, एयाइ अकुव्वता

जहारिहं अरिहंतदेसिए मग्गे (न) हवइ पवयणभत्ती अभत्तिमतादयो दोसा ॥"
एतस्या व्याख्यान सुबोधमिति कृत्वा न लिखित, विशेषस्तु लिख्यते-' अभत्तिमंतादयो दोसा ' अत्रादिशब्दस्य तत्रत्य आइसद्दाओ णिज्जरसुयलाभस्स अणाभागी भवइ । ननु विरुद्धमेतत् प्रथमगाथाया ' न कीर्तिर्न निर्जरा कर्म्मबन्धश्च भवति' इत्युक्त, अस्या तु 'प्रवचनभक्तिर्भवति, अकुर्वतो अभक्तिः, निर्जराश्रुतलाभो च न भवत' ' इत्युक्त, अत. कथ न विरोधः ? आचार्य आह—सत्यमुक्त, पर सुकुमारमतित्वाद्विषयविभाग न वेत्सि त्व अवहितो भूत्वा शृणु, कथ्यते अस्माभिः—निश्चव्यम् । यदि कारण विना सुसाधुः पार्श्वस्थादीना वन्दनादिक करोति ततः कीर्त्यादिर्न भवति, यः पुनः कारणेऽप्युक्तस्वरूपः सुविहितोऽपि वन्दनादि न करोति ततः प्रवचनभक्त्यादि कृत न भवति, अत स्थितमेतत् कारणे सर्वमप्येतेषा कार्यम् । कल्पेऽप्येतत्सर्वं भणित, नवर परियागस्थाने ' परिवार ' इत्युक्त, परिसस्थाने परिषदिति व्याख्यातम् । तथाहि तद् गाथार्द्धम्–"परिवारो से सुविहिओ परिसगओ साहई व वेरग्ग" ति। आवश्यकचूर्ण्यामपि सर्वं प्राय. एव, नवर किंचिद्विशेषोऽस्ति स लिख्यते— " परियाओ दीहो बभचेरस्स पुव्वति प्रथमद्वारे, तथा परिसद्वारे अप्पवओ वा जइ नव दीहामितो लोगो सव्वीइ सुटहिच्चि । अपि च-' प्रावचनी धर्मकथी ' इति श्लोकः, तथा पवयणभत्ती ण कया होइ एतस्याग्रे तत्र " जे अभत्तिमतेहिंतो दोसा ते सो करेज्जा, रुट्ठो जहा अट्टालगवायगेण वधाविया साहू जो य सो अभत्तिमतो दोसे काहिइ तो तेण सय चेव कया भवति, एसा अम्ह विही, तस्स न जोग तस्स त कायव्व ति । " अत' स्थितमिह शुद्धयतिभिरपि कारणे वन्दनादिक विधेय पार्श्वस्थादीनाम् । ये पुनर्भवन्ति पार्श्वस्था उपलक्षणत्वादस्य अवसन्नादयश्चेत्यपि द्रष्टव्यम्, एतैर्मलिनाचाररूपैर्नो नव युज्यते यतो तेषामुत्सर्गवादिनामिद वन्दनादिनिषेध भणितु युक्तमिति गाथत्रयार्थः ।

तानेव पादोनगाथाचतुष्केणाह—

सुत्तत्थपोरिसिं नो करेइ गिण्हेइ परपरं वत्थ ।
पढइ धम्मकहाओ पडिलेहइ णेय भंडिल्ले ॥ १८ ॥
विगई आहारेइ निच्च कडिपट्टयं च बधेइ ।
गाम कुल ममायइ परिहवइ नत्थ रायणिए ॥ १९ ॥

लोयगहणंमि पक्खो सपक्खक्ख परपक्खपयाण ओमाण ।
गणभेए तत्तिल्लो सयण दिजमस्स मज्झमि ॥ २० ॥

एवमणसोऽपि ण कुणइ अणेगमाइसुत्तेण ।
पञ्चरस दोसा हवंति ।

व्याख्या—सूत्रार्थपोरुषीशब्दस्योभयत्र सम्बन्धात् सूत्रपौरुषीमर्थपौरुषीं च यो 'नो' नैव 'करोति' विदधाति स पार्श्वस्थादिर्भवति, इत्येव सर्वेष्वपि पदेषु सम्बन्धः कार्यः । कर्मरहितपदेषु च स्वय सागत्य निधेयम् । एतच्च सूत्रार्थपोरुष्यकरण ज्ञानतः सर्वपार्श्वस्थलक्षणम् । तथा चोक्त निशीथे—

" दुविहो खलु पासत्थो देसे सव्वे य होइ नायव्वो ।
सव्वे तिन्नि विगप्पा देसे सेज्जायरकुलाई ॥ १ ॥

देशत पार्श्वस्थस्य व्याख्या तद्गाथया—

" सेज्जायरकुलनिस्सिय ठवणकुलपसोयणा अभिहडे य ।
पुव्विं पच्छा सथुयनिययग्गभोई य पासत्थो ॥ १ ॥

'कुलनिस्सिया 'पयस्स वक्खाण–तत्थ जाणि कुलाणि तस्स उवसमंति तेसु गामेसु वसति, अच्छइ, तेसि सयासाओ अहाराईणि उप्पाएइ ॥"
व्यवहारेऽपीदमित्थमेव, शेषस्तु सुगममिति न लिखितम् । एस देसपासत्थो ।
" इयाणिं सव्वपासत्थो तिविहभेओ भवइ, नाणमाइ—

" दसणनाणचरित्ते सत्थो अच्छइ तहिं ण उज्जमइ ।
एएण उ पासत्थो एसो अन्नो विपज्जाओ ॥

सत्थो अच्छइत्ति सुत्तपोरिसिं वा अत्थपोरिसिं ण करेइ, नोन्नमते, दसणाइयारे सु वट्टइ, चरित्ते ण वट्टइ, अइयारे वा न वज्जइ, एव सत्थो अच्छइ तेण 'पासत्थो' इत्यन्य पर्याय । अन्यत्प्येवमादि तत्रोक्त–अनेन च सूत्रार्थपौरुष्यकरणेन सर्वपार्श्वस्थत्व भाषित, दर्शनचारित्रे च प्रस्तावादुक्ते । भावार्थस्तु ज्ञानदर्शने सर्वपार्श्वस्थस्यापि भवत., चारित्र तु कस्यचिद् भवति कस्यचिन्नेति । व्यवहारे तु–" उसन्नो सज्झाए सुत्तपोरिसि अत्थपोरिसिं न करेइ, सव्वोसन्नो निक्कारणे सथारए सुवइ, एव पाढफलगाणि गृह्णाति, तानि परपरिवार,–सव्यतिरिक्तविक

त्यना, ईकारदीर्घत्वं चात्र " एए छचसमाणा " इत्यनेनाववोद्धव्यं, एवमन्यत्रापि। अर्थश्चास्य-एते षडपि समाना अ आ इ ई उ ऊ लक्षणा. समानाः सवर्णसंज्ञाः, ह्रस्वस्य स्थाने दीर्घो दीर्घस्य च ह्रस्व इति यावत्। पठति सूत्रतः कण्ठे करोति धर्मकथाः सुभाषितादिका लोकयात्रार्थं, प्रत्युपेक्षते दृष्टिदानतो न च न च ' स्थण्डिलानि ' भूमिप्रदेशान् कायिकाद्यर्थम् । द्विर्भावश्चात्र पूर्वोक्तवत्, विकृतीश्च घृतादिका आहारयति भुङ्क्ते नित्य सर्वदा, कटिपट्टक चोलपट्टलक्षण बध्नाति परिदधाति, ग्राम कुल प्रतीत ' ममीकरोति ' तत्राभिष्वङ्ग विदधातीत्यर्थः । परिभवति तिरस्कुरुते, तथा चेति समुच्चयार्थः, रत्नाधिकान् ज्ञानादिगुणाढ्यान् यथोचित्याकरणतः । एतच्च पापश्रमणलक्षणमपि । तथाचोक्तमुत्तराध्ययने—

" आयरियउवज्झायाण सम्म न पडितप्पइ ।
अप्पडिपूयए थद्धे पावसमणेत्ति वुच्चइ ॥ "

तथा आवश्यके दशाश्रुतस्कन्धे चेदम्—

आयरिअ-उवज्झाएहिं सुत्तं अत्थ च गाहिए ते चेव (?)
वरिवसई बाले महामोह पकुव्वइ ॥ "

भवान्तरे बोधिं न लभते इत्यर्थः । लोकग्रहणे जनोपार्जने पक्षो धर्मकथनादिनाऽऽदर । इत्थ च ' यद्यपि धर्मार्थं वय कुर्मः '-इति भणिष्यन्ति, तथाऽपि सर्वकाल न कर्त्तव्या देशना । यत उक्त निशीथे—

आहाराइणट्ठा जस्स हेउ अहव पूयणनिमित्त ।
तक्कम्मो जो धम्म कहेइ सो काहिओ होइ ॥ १ ॥

काम खलु धम्मकहा सज्झायस्सेव पञ्चम अग ।
अव्वोच्छित्तीय तत्तो तित्थस्स पभावणा चेव ॥ २ ॥

तहवि हु ण सव्वकाल धम्मकहा जीइ सव्वपरिहाणी ।
नाउ वा खेत्तकाल पुरिस च पवेसए धम्मं ॥ ३ ॥

तस्मात् स्थितं सर्वदैव लोकयात्रायां पार्श्वस्थत्वम् । स्वपक्षपरपक्षयो पार्श्वस्थादितापसादिश्रमणयोरवमानन्यूनतादिरूपम्। गणभेदे गच्छविघट्टने तप्तिमान चिन्तावान्। इत्प्रत्ययश्चात्र ' तप्तिकः ' । " सउयत्थंपि मुणेज्जह आल इच्छ

मण मउय । '–इति वचनात् । शयन स्वापो दिवसस्य वासरस्य मध्ये । तदवस्थिता कारण विनेति सर्वत्र यथासवध योजनीयम् । एषणाशुद्धिमागमोक्तस्वरूपा न करोति न विदधाति । अस्या एव साधनायाह–अनेकसाधुषु प्रचुरयतिषु, येन यस्मात् कारणात्, पञ्चदश इति सख्यार्थे, दोषा आधाकर्मादयः । अत्र चाध्यवपूरको मिश्रदोषमध्ये क्षिप्त इति पञ्चदश । परमार्थतस्तु षोडशापि भवन्ति जायन्ते । अयमभिप्रायः–येषु गृहेषु प्रभूता यतिसघाटका भिक्षार्थं प्रविशन्ति तेषु तत्तद्द्रव्यापेक्षयैकस्मिन्नपि गृहे इतरान्यगृहापेक्षया वा दीनापेक्षया च षोडशापि आधाकर्मादयो भवन्ति । उपलक्षण चैते, उपधिप्रमाणातिरिक्ता-विधिपरिभोगादयोऽन्येऽपि वाच्या इति पादोनगाथाचतुष्टयार्थ ।

यत एवमत सपादगाथया जीवोपदेशमाह—

तम्हा ववहारणय सरतेण रे जीव ! ॥२१॥

मण णिच कायव्व नत्थ तेत्तिय ताण ।
जेण नियधम्मवुड्ढी जायइ ण हु पवुस्सन्ति ॥२२॥

व्याख्या—तस्मात्कारणात् व्यवहारनय निश्चयनयेतर सरता गच्छता स्मरता वा चित्ते धारयता रे 'जीव' इत्यामन्त्रण त्वया भवता नित्य सर्वकाल कर्तव्य विधेयम् । तत्र पार्श्वस्थादिक्षेत्रे तावन्मात्रमुक्तस्वरूप तेषा पार्श्वस्थादीना, येन यस्मान्निजधर्मवृद्धि स्वचारित्रोपचयो जायते प्रादुर्भवति । न च नैव ते पार्श्वस्थादय प्रद्विषन्ति रुष्यन्तीति सपादगाथाऽर्थ ।

समाप्त पार्श्वस्थवन्दनादिप्रतिपादको द्वितीयोऽधिकार ।

साम्प्रत तृतीय गाथात्रयेणाह—

पक्खपडिक्कमणकए विवयंति केइ णेय जाणंति ।
णियधम्मधण अप्पे हारेमो उभयहा जेण ॥२३॥
सत्थभणिअंपि जत्तो आयरिअ पुव्वसूरिपवरेहिं ।
नो जुज्जइ काउ अणत्थहा जेण तक्करणे ॥२४॥
जपि हु पुव्वसूरीहिं णिच्छिय तंपि धम्मनिरयाण ।
म हु णिच्छइउ जुज्जइ छउमत्थाण विसेसेण ॥२५॥

व्याख्या—पक्षप्रतिरूपणकृते पाक्षिकातिचारशुद्धिनिमित्त विवदन्ते निजनिजाभिप्रायोक्तिमत्युक्तिभि• स्पर्द्धन्ते । अयमभिप्रायः—एके वदन्ति, पञ्चदश्या पाक्षिकप्रतिक्रमण विधीयते, अन्ये तु चतुर्दश्या, उभयेषा मतस्याप्तोक्तत्वात् केऽपि न सर्वे, नैव नच जानन्ति बुध्यन्ते निजधर्मधन स्वरूपवित्त 'अस्हे 'ति वय हारयाम• औद्धत्यकरणत• स्फोटयामः, उभयथा पञ्चदशीपरिग्रहेण चतुर्दशीग्रहणेन च, येन यस्मात्कारणात् । शास्त्रभणितमपि आस्तामभणितमित्यपिशब्दार्थ , यत्प्रतिक्रमणादिक नो नैव आचरित सेवित पूर्वसूरिभिश्चिरन्तनाचार्यस्तत्प्रतिक्रमणादिक नो निषेद्धे युज्यते घटते कर्तुं, अनवस्था 'प्रतिष्ठापक एतदन्यथान्यदन्यथा–करिष्यति '-इत्येवरूपा, येन यस्मात् तत्करणे पूर्वाचार्यानासेवितविधाने भवतीति क्रियाऽध्याहारो द्रष्य ॥ यदपि नहु नैव पूर्वसूरिभिर्बहुश्रुतचिरन्तनाचार्यैर्निश्चित तदपि अनिर्णीतमपि न केवल स्वयमनिश्चित न निश्चीयते इत्यर्थ । धर्मनिरताना प्रधानोपशमामृतरसलम्पटाना विशेषेण आदरेण । तथाहि-पञ्चदश्या पाक्षिक चतुर्दश्या वा पाक्षिकमिति निद्धार्यं नोक्त, पाक्षिक तु प्रोक्त सामान्येन । तत्र दशाश्रुतस्कन्धे तावदित्थम्–" पक्खियपोसहिए सुसमाहिपत्ताण झियायमाणाण इमाइ दस चित्तसमाहिठाणाइ असमुप्पन्नपुव्वाइ समुप्पज्जेज्जा "। इद सूत्र, चूर्णिरस्य–पक्खिय पक्खियमेव, पक्खिए पोसहो पक्खियपोसहो चाउद्दसीसु अट्ठमीसु वा । ' समाहिपत्ताण 'ति नाणदसणचरित्तसमाहिपत्ताणंति नाणे वट्टमाणाण। झियायमाणाण इमाइ दस चित्तसमाहिठाणाणि असमुप्पन्नपुव्वाणि समुप्पज्जेज्जा॥" अत्र पाक्षिक भिन्न, चतुर्दशी अष्टमी च भिन्ने इति केचिद्व्याचक्षते । पोषधशब्देन चतुर्दश्यष्टम्यो• सबन्धकरणात् ' चाउद्दसी अट्ठमीसु वा पोसहो ' इति । एव व्याख्याने पञ्चदश्या पाक्षिकम्, अत्र तु पाक्षिकशब्देन सबन्धकरणात् । नच चतुर्दश्यष्टम्यो ' चाउद्दसी अट्ठमीसु वा पक्खियपोसहो ' इति पाक्षिक चतुर्दशीं ( श्या ) कथयति, परमत्र मते चतुर्दशीग्रहण निरर्थक भवति, पाक्षिकशब्देनैव चतुर्दश्या ग्रहणात् ' अट्ठमीए वा ' इत्येतदेव भणितव्य स्यात्, पूर्वव्याख्याने तु पोषधप्रस्तावाच्चतुर्दशी अष्टमी पोषधमिति प्रतिपादितमित्यनिन्द्यम् । व्यवहारे चेद कारणेनाचार्ये पृथग्गेराकी एकरात्रादिक वसतीत्येतस्मिन् प्रस्तावे—

" रिज्झाण परिवाडी पव्वे पव्वे य दिंति आयरिआ ।
मासद्धमासियाण ...व पुण होइ मज्झं तु ॥

पक्खपव्वस्स विभासा मज्झगाहा—

" पक्खस्स अट्ठमी खलु मासस्स पक्खिय मुणेयव्वं ।
अन्नपि होइअव्व उवरागो चंदसूराण ॥

पक्खपव्वस्स मज्झ अठमी बहुलाइआ मासत्ति काउ मासस्स मज्झ पक्खिय किण्हचउद्दसीए विज्जासाहणोवयारो ॥ आह–पर्वेव एगरायगहण कायव्व, दुराय तिराय वेति न वत्तव्व । अत उच्यते चाउद (सी) गाहा—

चाउद्दसिग्गहो होइ कोइ अहवावि सोलसिग्गहण ।
वत्त तु अणज्झते होइ दुराय तिराय वा ॥ "

इय गाथा व्याख्यानार्हा, पर न व्याख्याता कण्ठ्येत्युक्तम् । सर्वस्या-प्येतस्य किंचिद् व्याख्यातस्यापि पूज्यकथितोऽर्थ कथ्यते–विद्याना देवता-धिष्ठितमन्त्राणा, परिपाटि परावर्तन, पर्वणि पर्वणि वक्ष्यमाणलक्षणे, चकारोऽ-वधारणे स च व्यवहितो योज्यः, ददत्येव अनेकार्थत्वाद्धातूना कुर्वन्ति, आचार्या सूरय । पर्वस्वरूपमाह–मासार्द्धमासिकयो पर्व पुनर्भवति मध्य वक्ष्यमाण, तु पुरणे । तदेवाह–पक्षस्य प्रतीतस्य अष्टम्येव तिथिलक्षणा, खलु अवधारणे, स च योजित एव, मासस्य पुनः प्रतीतस्य पाक्षिकमनिश्चितरूप, यदि पुनरत्र चतुर्दशी पञ्चदशी वाऽभणिष्यत्ततो निश्चित स्यात् । यच्चूक्त चूर्णि-कृता पाक्षिकव्याख्यान कुर्वता–" मासस्य मज्झ पक्खिय किण्हपक्खस्स चउद्दसीए विज्जासाहणोवयारो " तत्सम्यगवगम्यते । तथाहि–यदि कृष्णच तुर्दशी पाक्षिकमित्युच्यते ततो ' विज्जासाहणोवयारो ' अत्र उपचारशब्दो नावबुध्यते, नहि उपचारशब्देन परिपाटिर्भण्यते स्वसमये परसमये । किञ्च–एव व्याख्याने शुक्लचतुर्दशी पाक्षिकमङ्गत्या न स्यात्, भण्यते चैतन्मते शुक्लच-तुर्दश्यपि पाक्षिकम् । पूज्यास्तु वदन्ति–उपचारशब्देन पूर्वसेवाऽत्र भण्यते, तत्र कृष्णचतुर्दश्या पूर्वसेवा नूतनमन्त्र ग्रहणजपलक्षणा क्रियते, पाक्षिके च पञ्चदशी लक्षणे परिपाटि परावर्त्तन विधीयते, इत्थ व्याख्याने पौर्णमास्यपि पाक्षिक भवति, परिपाटी च घटते । शुक्लचतुर्दश्या तु पूर्वसेवा न क्रियते इति सर्वजन प्रतीत कृष्णचतुर्दश्या च स्फुटो मन्त्रो भवति, अतस्तत्र पूर्व्वसेवा । द्विरात्रत्रिरात्र साधकगाथाया अपि पूज्यव्याख्येय–चतुर्दश्या कृष्णाया ग्रहोऽभिनवविद्याग्रहणा

दिरूपो भवति जायते कोऽप्यनिर्दिष्टनामा। अथवापीति विकल्पार्थः, षोडश्यां प्रतीतायां ग्रहणं सूर्योपरागलक्षणं भवतीति सम्बध्यते, व्यक्तं स्पष्टं पञ्चदश्यां षोडश्यां वा ग्रहणं जातमित्यवगम्यमानेऽनवबुद्ध्यमाने द्विरात्रं त्रिरात्रं भवति वसितव्यम्। आचार्यस्य अयमभिप्रायः—यदि कृष्णचतुर्दश्यां मन्त्रग्रहणं न कृतं भवति ततः पञ्चदशीषोडशीरूपदिनद्वयं, कृते तु ग्रहणे कृष्णचतुर्दशीसहितं तदेव त्रयमज्ञातं भवति। ज्ञाते तु यदि कृष्णचतुर्दश्यां ग्रहणं पूर्वसेवालक्षणं कृतं ततो दिनद्वयं। कृते त्वेकमेवेत्यादि ग्रहणे—चन्द्रग्रहणे तु ज्ञाते एकं दिनं ज्ञाते तु दिनद्वयम्। नहि शुक्लचतुर्दश्यां पूर्वसेवा भवति, ये तु चतुर्दश्यां पाक्षिकं वदन्ति ते चन्द्रग्रहणे दिनद्वयं पौर्णिमामतिपल्लक्षणमज्ञाते, ज्ञातेत्वेकमेव शुक्लपक्षे परिवर्तनं नेत्युभयोरपि मतत्वात्, आदिग्रहणे च ज्ञाते दिनद्वयं अज्ञाते तु दिनत्रयं भवति। किञ्च यन्मते चतुर्दशी पाक्षिकं तन्मते चतुर्दशीग्रहणं " चाउद्दसिग्गहो होइ कोइ " इत्यत्र तन्निरर्थकं स्यात्, चतुर्दश्यां अवस्थितत्वात् किं तद्ग्रहणेन। अन्यच्च पूज्या अत्रार्थे वदन्ति—यदा सांवत्सरिकं पञ्चम्यामासीत् तदा पाक्षिकाणि पञ्चदश्यां सर्वाण्यभूवन्। यतः—"इय सत्तरी जहन्ना"। इत्येतत् पदमित्थं घटते। तथाहि - भाद्रपददिनानि दश, अश्वयुक्कार्तिकमासदिनषष्टिश्च, मीलिते च सप्ततिर्भवति। अभिवड्ढियंमि वीसा इयरेसु सवीसई मासो।"—यतः श्रावणः परिपूर्णः भाद्रपददिनानि च विंशतिर्मीलिते च पञ्चाशत्, एवमनभिवर्द्धिते तु विंशतिस्सैव श्रावणदिनरहिता। साम्प्रतं चतुर्थ्यां पर्युषणा ततश्चतुर्दश्यां पाक्षिकाणि घटन्ते, यतो भाद्रपददिनान्येकादश, अश्वयुग्दिनानि त्रिंशत्, कार्तिकदिनान्येकोनत्रिंशत्, सर्वमीलने सप्ततिः। सविंशतिमासश्च एकं आषाढदिनं श्रावणदिनानि त्रिंशत्, भाद्रपदस्य चैकोनविंशतिश्च तथैव, परमेकं दिनं आषाढमासान्त्यं क्षेपणीयमिति। यच्चोच्यते एवं सति षष्ठं स्यात् पाक्षिके, भवतु, मासेन हि पाक्षिकं षष्ठेन क्रियते इत्यस्माभिरुच्यते, किन्तु चतुर्थेन, चतुर्दश्युपवासश्च पर्वतिथितपोविधानं, मा तत्र लगत्येतदप्यनिन्द्यः। तथा दिवसो पोसहो पक्खो वइक्कंतो " इत्यादिकस्य पाक्षिकक्षामणकस्य चूर्ण्यां स्पष्टतरं व्याख्यानमिदं—पौषधोऽष्टमी चतुर्दश्युपवासकरणं, ' पौषधं तु प्रतीतं '—इति न व्याख्यातं, अस्मादपि व्याख्यानात् चतुर्दशीव्यतिरिक्तः पक्षः प्रतीयते तथा च तत्रोक्तं " पोसहोत्ति अट्ठमी चउद्दसीसु उववासकरणं सेसं कण्ठगिति। यदि त्वत्रापि किञ्चिद्व्याख्यानान्तर

क्रियते ततः सन्देहोऽपि स्यात्, परं तत्र मध्यस्थामृतरसतृष्णाना मनासि मीणयति एवमन्यशास्त्रान्तरोक्तमपि य मध्यस्थीभूत्वा विचारणीय, तत्त्वं तु सर्वज्ञा विशिष्ट-श्रुतविदो वा विदन्ति । श्रावकापेक्षया तु पञ्चदश्यपि विशेषेणोक्ता । तथा चाव-श्यककचूर्णौ—

" सव्वेसु कालपव्वेसु पसिसिट्ठो जिणमए हवइ जोगो ।

अट्ठमी चउद्दसीसु णियमेण हवेज्ज पोसहिओ ॥" सामान्यतस्तु तेषामपि भगवत्पादादाविदमुक्तं—" चाउद्दसट्ठमुद्दिट्ठपुण्णमासीसु ण पडिपुण्णपोसहं सम्मं पालेमाणेत्ति "—इति समपञ्चभावनायुक्त गाथार्थः ॥

यत्रैव तत किम् ? इत्याह—

तम्हा रे जीव ! तुम मन्नसु धम्मत्थमप्पणो तत्थ ।
तं कुण ज आयरियं ज सत्थे तस्स सद्दहणं ॥२६॥

व्याख्या—तस्मात्कारणात् रे जीवेत्यात्मन् त्वं भवान् मन्यस्व जानीहि धर्मार्थं क्षान्त्यादिनिमित्तमात्मनो जीवस्य एव वक्ष्यमाणन्यायेन, तत् कुरु विधेहि, यत् पाक्षिकादिकमाचरितमासेवितं पूर्वाचार्यैरिति गम्यते यत् शास्त्रे सिद्धान्ते तस्य शास्त्रोक्तार्थस्य श्रद्धानमेतदिति । अयमभिप्रायः—शास्त्रोक्तं निश्चितमपि यन्नासेवितं पूर्वपुरुषैः केनचित्कारणेन तदन्यथा न क्रियते तदाचरणाभङ्गात्, तत्कृतं तु क्रियते, यथा बहुगुणं भवति तथा त एवजानते इति गाथार्थः ॥

समर्थितं तृतीयः पाक्षिकविचारणलक्षणोधिकारः ।

इदानीं चतुर्थमाह—

अन्ने सिद्धंतमहोयहिस्स गंभीरिमं अयाणंता ।
वंदणतियं दाविंति नेव बुज्झंति भणियंपि ॥२७॥

व्याख्या—अन्ये अपरे सिद्धान्तमहोदधेरागमरत्नाकरस्य गाम्भीर्यमल्पशेमुष्यज्ञातमध्यत्वमजानाना अवगच्छन्तो वन्दनकत्रिकं कृतिकर्मत्रयं दापयन्ति । नैव नच बुध्यन्तेऽवगच्छन्ति भणितां अपि न केवलमभणितां इत्यपिशब्दार्थः। आगमैरिति शेष इति गाथार्थः ।

नतु किमत्रदूपण ? यदि प्रत्याख्यानालोचनापराधक्षामणार्थं वन्दनकत्रय दीयते, आचार्यः प्राह—शास्त्रोक्तव्याहतेः। कथम् ? अत आह गाथे—

जम्हा पचक्खाणे कयमि अहिगे य जायसङ्कस्स ।
घदणय ब्राऊणं त कीरइ ण उण मव्वत्थ ॥२८॥
आलोयणेवि गामा- गयस्स साहुस्स वंदणं भणिय ।
पच्चक्खाणालोयणधणिमि मुज्झंति मंदमई ॥२९॥

व्याख्या—यस्माद्यतः प्रत्याख्याने एकाशनादिके कृते विहिते सति अधिके पुनरत्यर्गले, चः पुनरर्थः स च दर्शित' जातश्रद्धस्योत्पन्नवाञ्छस्योपवासो मया कर्तव्य इति उपलक्षणत्वादस्याहारपरिणामाभावेऽभक्त ग्रहीतुकामस्य तृतीयपौरुष्या वा भुक्तोत्तरप्रत्याख्यान कुर्वाणस्येत्यपि द्रष्टव्यम्। वन्दनक द्वादशावर्तलक्षण दत्त्वा वितीर्य तत्प्रत्याख्यान क्रियते विधीयते, न पुनर्नेव सर्वत्र प्रत्याख्याने आलोचनेऽपि न केवल प्रत्याख्याने पूर्वोक्तयुक्त्या विशेप इत्यपिशब्दार्थः ग्रामागतस्य विहारान्निवृत्तस्योपलक्षणत्वादपराधालोचनोपसदालोचने अपि दृश्ये। साधोर्यतेर्वन्दनं द्वादशावर्त्तं भणित प्रतिपादितम्। अयमभिप्रायः पूर्वं प्रत्याख्यान विहित, पश्चादधिकतपोवाञ्छा जाता, अपरिणतिर्वा भुक्तोत्तरे वा, ततो वन्दन दत्त्वा प्रत्याख्याति, न पुनः प्रथमतः प्रत्याख्याने विहाराद्यागत आलोचना दास्यति, स्थानस्थितो वाऽपराधालोचना दत्त्वा प्रायश्चित्त लास्यति, उपसम्पदर्थं वाऽऽलोचयिष्यति, ततो वन्दनं दत्वा आलोचयति नेत्थ सामान्यालोचने। नन्वपराधालोचनाऽत्र भविष्यति, ततः को दोप ? सत्य, सत्याविरोध स्यात्। अस्या हि वन्दनकद्वय दीयते, ततश्चत्वारि स्यु', न त्रीणि। तथा चोक्तं चूर्ण्याम्—"विगई आयबिले काउस्सगो परियट्टिए समाणे। उवसपज्जणअवराहविहारउत्त मट्टालोयणा एया। एएसु सत्तसु दो दो वदणगा।" किञ्च—यथाचार्यपुरतोऽपराधान्निवेद्य प्रायश्चित्त लाति, ततो भवति वन्दन श्रावकस्य वृद्धाचरणतो नतु सूत्रतः, नहि श्रावकस्य सूत्रे आलोचनाविधानमस्ति, वृद्धसामाचारी चास्माक सम्मतैवेति। तथाचोक्त—"वन्दनकस्थानप्रतिपादिका—

पडिक्कमणे सज्झाए काउस्सग्गावराहपाहुणए।
आलोयणसवरणे उत्तिमट्ठे य वदणय ॥"

एतस्यामावश्यकगाथा व्याख्यानयता तच्चूर्णिकारेण-" आलोयणत्ति जाहे विहारालोयणा वा अवराहालोयणा उवसपज्जणालोयणा वा सवरण वेआलिय अनरासा वा भत्तट्ठे महिए इच्छा जाया 'अज्ज अभत्तट्ठ करेमि' त्ति अहवा 'ण जीरइ' त्ति एय सवरण नावस्थितमत्र त्रीणि वन्दनकानि न भवन्ति। एकवन्दनपूर्वक तु यथा पूर्वाचार्यै कारित प्रत्याख्यानालोचन तथा कार्यते, तत्त्वपराधार्थ वा। तथा चोक्त चूर्ण्यां—"अवराहो गुरूण कओ तपि वदित्ता खामेइ विणओवयारे। '—इत्यादि गाथोक्तार्थं चेति। किञ्च ये प्रतिक्रमण कुर्व्वन्ति तेषामेकमपि वन्दन न भवति। तथा चोक्त व्यवहारे " कारणेन पृथग्वसतिस्थिता अपि साधव प्राभातिक प्रतिक्रमणमाचार्यसमीपे समागत्य कुर्व्वन्तीति स्थिति, यदि तु सापायमागच्छता ततो यत्रैव कृत तत्सर्व्वमागत्य कुर्व्वं तीति। " एतस्मिन् प्रस्तावे "अहवा समत्त आवस्सय काउ जेट्ठो आयरियसगासे आलोइत्ता पच्चक्खाण गेण्हइ। " इदमत्रहृदय-वन्दनक विनाऽपि आलोचनप्रत्याख्याने कृते। ननु यद्येवं यो न प्रतिक्रामति तस्य त्रीणि तानि भवन्तु, तथापि नाम प्रतिक्रमणविधि, कथमन्यथाप्रतिक्रमणद्वारात् आलोचनसवरणद्वारे पृथगुपात्ते? अतो यत्र भणित तत्रैव कर्त्तव्यम्, अन्यथा सूत्रार्थपौरुषीव्यतिक्रमकरणे कथमवसम्मतादोष? प्रायश्चित च साधोर्भणितमिति। ननु यथा किञ्चित्कर्त्तव्यमाचरणोक्त भवति, तथा वन्दनकत्रयमपि भवतु नाम यदि तल्लक्षणमुपपद्यते, परम्परागतत्वबहुमतात्यानिवारितादि, येऽपि साम्प्रत दापयन्ति तेषामपि पूर्वाचार्यैर्न दापित, पूर्वैर्दृष्टत्वात्, येन तु दापित स तदैव निषिद्धोऽन्यैर्नापि तत्करण सम्मतमिति स्थिते प्रत्याख्यानालोचनाभ्यर्णा शब्द शृण्वन्ति सन्दिह्यन्ते मन्दमतयस्तुच्छधिषणा इति सुष्ठूक्त-" अन्यत्र यानि वन्दनानि चतुर्दशयतीनामवस्थितानि भणितानि। तथा चोक्तमावश्यके—

" चत्तारि पडिकमणे किइकम्मे तिन्नि होति सज्झाए।
पुव्वण्हे अवरण्हे किइकम्मा चोद्दस हवन्ति ॥ "

तेषा वार्तामपि स्वय न कुर्व्वन्ति, अभणितेषु च श्रावकाणा वन्दनकेष्वेव बद्धाग्रहता अहो मतिरिति गाथार्थ ॥

अत्राप्यर्थे जीवोपदेशमाह—

तत्थवि तुम मज्झत्थु हे जीव! तह माणवरत्तु।
जो पुव्वसूरिमग्गो, सो मग्गपसाहगो अम्ह ॥३०॥

भक्टार्थी । नवरं 'स्वर्ग' इति उपलक्षणत्वान्मोक्षसाधकश्चेत्यपि द्रष्टव्यम् । ननु मोक्षस्य प्रधानत्वात्कथं तस्योपादान सूत्रे न कृतम् ? सत्य, साम्प्रतकालापेक्षया अनन्तरं स्वर्गस्यैव भावादिति गाथार्थः ॥

समाप्तो वन्दनकत्रयविचारलक्षणश्चतुर्थोऽधिकार ॥

साम्प्रत पञ्चमः—

अइगरुयमोहविहुणियसुहबोहा केइ धम्ममगणिंता ।
कारिंति णंदिमाई सङ्कीण संजईहिंतो ॥ २४ ॥

व्याख्या—अतिगुरुकमोहविधूनितशुभबोधा बृहत्तरमूढताकम्पितप्रधानमतयः केचनैके धर्म्मं क्षान्त्यादिकमगणयन्तस्तिरस्कुर्वाणाः कारयन्ति नन्यादिकम्, मकारोऽत्र प्राकृतप्रभवः । आदिशब्दान्निषिद्धानुष्ठानादिग्रहः । तत्र नन्दिरुपधानादिषु समयप्रतीतो विधिः, श्राद्धीना श्राविकाणा 'सजईहिंतो'त्ति सयतीभ्यो व्रतिनीभ्यः सकाशात् 'हिंतो' त्ति पञ्चम्याः स्थाने निर्देश', "ङहिंतोल्लोपाश्चस्यात' पञ्चम्याः (?) ।" इति प्राकृतलक्षणेन, स च दर्शित एव । अयमभिप्रायः–स्वयं विहार व्रजन्तोऽन्येषु आचार्येषु बहुश्रुतादिषु विद्यमानेषु निजार्यिकाभि श्राविकाणा नन्यादि कारयन्ति, यदि पुनरेकोऽप्याचार्यस्तत्र न भवति ततः सामाचार्या अविरुद्धमपि भवेदिति गाथार्थः ॥

एतस्यापि आगमसवादपूर्वकं प्रतिषेधपूर्वं जीवोपदेशमाह—

आरेण अज्जरक्खिय-इच्चाइवयणओ न तं जुत्त ।
रागद्दोसविमुक्को रे जीव तहिंपि मा मुज्झ ॥ २५ ॥

व्याख्या—आरेणेत्यर्वाक् आर्यरक्षितेत्यादिवचनत', आदिग्रहणात् "कालाणुन्नाओ नत्थि अज्जाण सामइय तह वयारोवण च पच्छित्तदाण चेति" दृश्यं सुबोधश्च। अयमभिप्राय'—निगोदजीवविचारार्थायातदेवेन्द्रवन्दितार्यरक्षिताचार्यात् पूर्वमासीत् कालादिषु आर्यिकाणामनुज्ञा, अर्वाक् पुनर्नास्ति, सामायिकादिक च नन्दिपूर्वक क्रियते, तत' तत्प्रतिषेधात् एतदपि प्रतिषिद्ध बोद्धव्यम् । अतो नेति निषेधे, युक्त समतं, रागद्वेषविमुक्तोऽभिष्वङ्गमत्सररहितो जीवेत्यामन्त्रणे, नन्यादिकरणेपि न केवल पूर्वोक्तेषु इत्यपि शब्दार्थः । मेति निषेधे मुह्यस्व मोहं विधेहि इति गाथार्थः ॥ २५ ॥

समाप्तोऽयमार्यिकानन्दिवक्तव्यतार्थं पधम ॥

अधुना पष्ठ:—

आगमरहस्सयज्ञा केइ असणाइ णिवारेंति ।
तं नो कप्पइ सुविहियजईण जेण सुए भणियं ॥ २६ ॥

व्याख्या—आगमरहस्यवाह्या. सिद्धान्तपरमार्थानभिज्ञा' केचनापरे-अशनादिक भोजनादिक, आदिशब्दात्पानीयादिग्रह', निवारयन्ति निषेधयन्ति। तन्निवारण नैव कल्पते युज्यते सुविहितयतीना प्रधानव्रतिनां, येन यस्मात् श्रुते द्वितीयाङ्गे भणितमुक्तमिति गाथार्थः ॥ २६ ॥

एतदेवाह—

जे उ दाणं पसंसंति वहमिच्छंति पाणिणं ।
जे उ णं पडिसेहन्ति वित्तिच्छेयं कुणंति ते ॥ २७ ॥

निगदसिद्धम्। नवरं वृत्तिच्छेदमन्तरायं कुर्वन्ति। इदमिह तत्व-परमते दृष्टनरसत्रादिदानेऽपि राजादिभि' पृष्टे निषेधादि निषिद्ध, किं पुन स्वमते इति तात्पर्यार्थ'।

तर्हि किं तेषा युज्यते ? इत्याह—

कप्पइ पुण भणिउ जे अम्हाण णेय कप्पई एय ।
सुविहियजईण परलोयमग्गमुग्गं पयत्ताण ॥ २८ ॥

व्याख्या—कल्पते युक्त भवति पुनर्भणितु वक्तु, 'जे' इति निपात पूरणार्थः, 'अम्हाण' ते अस्माक नैव नच कल्पते, एव आधाकर्मादिक सुविहितयतीना प्रधानमुनीना परलोकमार्गं स्वर्गादिविधिमुग्र भजन प्रपन्नानामाश्रितानामिति गाथार्थ. ॥ २८ ॥

ननु पिण्डविशुद्धिकथनमज्ञात तेषा, तत' स्वयमेव ज्ञाते ज्ञास्यन्ति, किमस्माक तत्र दोष. ? इत्याह—

जंपि य पिंडविसोहीकारण मङ्गाण देसिय समए ।
तपि य गीयत्थाणं केसिंची ण उण सव्वेसिं ॥ २९ ॥

व्याख्या–यदपि पिण्डविशुद्धिकथन–आधाकर्मादिदोषोज्झितभक्तभणन श्राद्धाना श्रावकाणा देशितं कथितं समये सिद्धान्ते, तदपि च गीतार्थाना यतिसामाचारीकुशलाना केषाञ्चित्, तकारस्य च लोपः प्राकृतलक्षणेन, दीर्घत्व चेकारस्य पूर्ववत्, नपुनरेव सर्वेषां सामान्येनेति गाथार्थः ॥ ३० ॥

यदि यतेरित्थ तर्हि श्रावकेण किं कर्त्तव्य ? इत्याह—

विहवाणुसारओ पुण सड्ढेणं सजयाण दायव्व ।
गुणविरहिआणमुचिय सगुणाण पुणो सुभत्तीए ॥ ३१ ॥

व्याख्या—विभवानुसारतो निज द्रव्यौचित्येन पुन' श्राद्धेन श्रावकेण सयतेभ्य' साधुभ्यः " छट्ठीविभत्तीए भण्णइ चउत्थी " इति लक्षणाच्चतुर्थी, अत्र दातव्य देयम् । किमविशेषेण ? इत्याह–गुणविरहिताना ज्ञानादिगुणशून्यानाञ्चित तद्योग्य, सगुणानां पुनर्विशिष्टज्ञानादिवता भक्त्या आन्तरप्रीत्या इति गाथार्थः ॥

' सगुणाना भक्त्या इत्युक्तम्, अतः के ते गुणाः ? अत आह—

ते य गुणा दसणाई, विजुया वा सजुया वा सव्वेसि ।
पुज्जा कप्पाइसु गथेसु जेणिमं भणिय ॥३२॥

ते पुनर्ये पूर्व्वसूचिताः, च. पुनरर्थे', गुणा दर्शनादयस्सम्यक्त्वादय' आदिशब्देन ज्ञानादिग्रहः । ननु यद्यमी गुणाः तत' किं असमुदिता' समुदिता वा पूज्या ? अत आह–वियुताः पृथक् स्थिताः, सयुता एकत्र स्थिता , वाशब्द' समुच्चयार्थः, सर्व्वेषा समस्ताना पूज्या' पूजनीयाः कल्पादिषु, आदिशब्दान्निशीथादिग्रहः, ग्रन्थेषु शास्त्रेषु यस्मादिद वक्ष्यमाण भणितमिति गाथार्थ. ॥

तदेवाह—

दसणनाणचरित्तं तवविणय जत्थ जत्तिय जाण
जिणपन्नत भत्तीए पूयए तत्थ त भाव ॥ ३३ ॥

व्याख्या—दर्शनज्ञानचारित्रतपोविनय यत्र साध्वादौ यावन्मात्र जानीयादवबुध्येत, किमविशेषेण ? नेत्याह-जिनप्रज्ञप्त सर्वज्ञोक्त भक्त्या सर्व्वादरेण पूजयेदर्चयेत् तत्र यत्यादौ त सम्यक्त्वादिक भावम् । गुणवत्सु तत्र दर्शन सम्यक्त्वं,

ज्ञान मत्यादि, चारित्र शीलतपोऽनशनादि, विनय आचार्याद्यौचित्यकरणमिति। न चात्रेदमाशङ्कनीयम्-एकविभक्तिनिर्देशात् समुदिता एवामी पूज्या न वियुता', तत. पूर्वोक्तव्याहतिः, यतस्तत्रैव निषेधे एकत्रेदमुक्त-"नाणमनेसु भत्तीवहुमाणो कायव्वो।" "तथा नाणाइमतेसु भत्ती" इत्यादि। दर्शनज्ञाने तु यद्यपि युक्ते सर्वत्रैव भवत, तथापि विशिष्टज्ञानरहित येनान्य दर्शन भण्यते इत्यादि स्वधियाऽभ्युह्य गीतार्थैरिति गाथार्थः॥

अत्राथ जीवोपदेशमाह-

रे जीव! तुम तम्हा मिच्छद्वियधयवडोव्व मा चलसु।
काउण थिरचित्त गुणाणुराइत्तण धरसु॥ ३४॥

व्याख्या—रे जीव! त्व तस्मात्कारणाच्छिखरस्थितध्वजपटवत् चैत्यशृङ्गदण्डचेलाञ्चल इव मेति निषेधे चल कम्पस्व, कृत्वा विधाय स्थिरचित्त-अविचलमानस, गुणानुरागित्व गुणवत्प्रीतिलक्षण धारय स्वीकुरु इति गाथार्थः॥

समाप्तोय दाननिषेधविचारवर्णन षष्ठोधिकार॥

इदानीं सप्तम प्रारभ्यते—

कुग्गाहुच्छाइयसुहविवेयपसरा रसति गयसं।
नो माहमाल जुत्ता सिद्धते जेण पडिसिद्धा॥ ३५॥

व्याख्या—कुग्राहेण दुष्टाभिप्रायेणोच्छादितोऽपनीत शुभ प्रशस्त, विवेकप्रसर कृत्याकृत्यानुष्ठानविभागो येषा ते रसन्ति जल्पन्ति एव वक्ष्यमाणप्रकारेणान्येऽपरे। तदेवाह-नो नैव माघमाला प्रतीता युक्ता सङ्गता, किम्? इत्याह-सिद्धान्ते आगमे यस्मात् प्रतिषिद्धा निवारितेति गाथार्थ॥

तमेव निषेध दर्शयितु पराभिप्रायेण किञ्चिदून गाथार्द्धमाह-

लोइयतित्थेसु ण्हाणदाणइयाइवयणओ

व्याख्या—लौकिकतीर्थेषु पराभिमतपुण्यक्षेत्रेषु अनुस्वारोऽत्र पूर्ववत्, स्नानदानमित्यादिवचनत, आदिशब्दात्सङ्क्रान्तिग्रहणादिग्रह, तत्र स्नान तत्तीर्थेषु जलादिना, दान तु तत्सम्मतक्षेत्रे द्रव्यादिवितरणेन कार्यमिति प्रक्रमाद् दृश्य

श्रावकेण। अयमभिप्रायः—यत्किमपि लौकिकैर्धर्म्मार्थं विधीयते पूर्व्वोक्तं तन्न श्रावकस्य कर्त्तुं न युज्यते, मालमालामपि ते आदिशब्दाद् गृह्णन्तीति भावः ॥

अत्रोत्तरार्थं सार्द्धा किञ्चिदधिका गाथा पराभिमतयुक्तिसहितामाह—

न नो। ज ज लोए कीरइ न तं जइ सव्वमकज्ज ॥ ३६ ॥
तो जत्ता रहभमण उववासो देवभवणपूयाई।
मा कुणह सया तुम्हे लोए किज्जन्ति जुत्तीतो ॥

व्याख्या—तत्परोक्त नेति निषेधे, यद्यल्लोके परदर्शने क्रियते तत्तद्यदि सर्व्वं समस्तमकार्यं ततस्तस्यात्रा-विशिष्टमहिमा, रथभ्रमण-जैनस्यन्दनपर्यटन, उपवासो-भोजनत्यागरूपः, देवभवनपूजादि-तत्र देवभवनं जिनसदन, पूजा सपर्या, आदिशब्दात्प्रतिप्रेक्षणकादिग्रह', मेति निषेधे, कुरुत विधत्त, कर्म्मपद तु सर्वत्र स्वय सम्बन्धनीयम्, सदा सर्वदा तुम्हेत्ति यूय कस्माल्लोके परमते क्रियते विधीयते, युक्तः कारणादिति गाथार्थः ॥

पराश्वासनपूर्व्वं स्वपक्षस्य पुष्टिमाह—

एयपि जुज्जइ चिय जइ सक्खा वारिय भवेज्ज इम।
समईए वारिंताण अंतराय जतो भणिय ॥ ३७ ॥

व्याख्या—एतदपि भवदुक्तमपि न केवल मदुक्तम् युज्यते एव घटते एव, यदि साक्षात् प्रकट वारित निषिद्ध भवेदिद मालारोपण 'मायमाला न क्रियते' इति स्वमत्या निजाभिप्रायेण वारयता प्रतिषेध कुर्व्वतामन्तरायोऽष्टम-प्रकृतिविशेषलक्षण भवतीति गम्यते यस्माद् भणित गदित शतककर्म्मग्रन्थ इति शेष इति गाथार्थः ॥

तदेवाह—

पाणिवहाईनिरओ जिणपूयामोक्खमग्गविग्घयरो।
अज्जेइ अतरायं ण लहइ जेणिच्छियं लाभं ॥ ३८ ॥

व्याख्या—प्राणिवधादिनिरतो जीवव्यापादनसक्त', आदिग्रहणान् मृषावादादिग्रह'। जिनपूजा-सर्वज्ञार्चन, मोक्षमार्गो यथावस्थितशुद्धप्ररूपणा-दिलक्षणस्तयोर्विघ्नकरो भञ्जकः। अर्जयति-स्वीकरोति अन्तराय कर्म्मविशेषम्।

तस्य फलमाह–नो निषेधे, लभते प्राप्नोति येन कर्मणोपार्जितेनेप्सितमभिलषितं लाभं धनधान्यादिकम्। अयमभिप्रायः–इयं माघमाला जिनपूजा न भवति भवति वा ? यदि न भवति, ततो निर्दोषा वारयन्तोपि यूयम्। भवति चेत्, ततो निश्चितं मद्वर्णितफलं भवतां हठादागच्छतीति गाथार्थः ॥

अत्रापि जीवोपदेशमाह—

मा मा तुमं णिवारसु पूयं रे जीव ! जिणवरिंदाण।
जइ सयलसोक्खवल्लीणमप्पणो महसि उल्लासं ॥ ३९ ॥

व्याख्या—मा मेति अत्यादरकरणार्थं वीप्सानिर्देशो निषेधार्थे, त्वं भवान् निवारय निषेधय पूजां सपर्यां, रे जीवेत्यामन्त्रणे, जिनवरेन्द्राणां सर्व्वप्रतिकृतीनाम्। यदीति स्वाभिप्रायसूचकार्थं, सकलसौख्यवल्लीनां समस्तसातलतानामात्मनो जीवस्य महसि वाञ्छस्योल्लासं वृद्धिमिति गाथार्थः ॥

तथा कोऽयं तवाभिनिवेशः ? यदुत लौकिकं न क्रियते। अविरुद्धं तदपि विधीयते इति दर्शयन् विशेषावश्योक्तां गाथामाह—

जं अत्थओ अभिन्नं अन्नत्था सद्दओ वि नट्टं चेव।
तं पि पओसो मोहो विसेसओ जिणमयट्ठियाणं ॥ ४० ॥

व्याख्या—यत्किमप्यनवधारितरूपमर्थतोऽभिधेयेन अभिन्नमव्यतिरिक्तं अन्वर्थाद्युक्ताभिधेयात् शब्दतो वचनतोऽपि तथा चेत्राभिन्नमेव तस्मिन् शब्दार्थाभिन्ने जिनवचनमाश्रित्य प्रद्वेषो मत्सरो मोहो मूढतेयं विशेषत आदरेण जिनमतस्थितानाम्। यथा—

पञ्चैतानि पवित्राणि सर्व्वेषां धर्मचारिणाम्।
अहिंसा सत्यमस्तेयं त्यागो मैथुनवर्जनम् ॥—

इत्यादि। इति गाथार्थः ॥

सूत्रेणैव ससम्बन्धां गाथामाह—

किंचाणुमयं हरिभद्दसूरिणो किंपि लोइयं जेण।
भणियं पिंचट्ठवणे विहिमागमलोगनाईण ॥ ४१ ॥

व्याख्या—किंच समुच्चये, अनुमत सम्मतं हरिभद्रसूरेरावश्यकादिवृत्तिकर्त्तुः, किमपि न सर्व्वं, तीर्थस्नानादिक लौकिक लोकाचीर्णं, यस्माद् भणितं प्रतिपादित बिम्बस्थापने बिम्बस्थापनपञ्चाशके। किं भणित ? तदाह— 'विहिमागमलोगनीए'त्ति विधान वक्ष्ये अभिधास्ये आगमनीत्या लोकनीत्या चेति गाथार्थः ॥

यद्यत्र लोकग्रहण ततः किम् ? इत्याह—

लोयगहणाओसिरीअभयदेवसूरीहिं तत्थ वक्खाय।
अविरुद्ध लोइयमवि कीरइ पासायकरणाई ॥ ४२ ॥

व्याख्या—लोकग्रहणाद् लोकशब्दप्रतिपादनात् श्रीअभयदेवसूरिभिर्भगवत्यादिशास्त्रवृत्तिकारिभिस्तत्र बिम्बस्थापनपञ्चाशकवृत्तौ व्याख्यात विवृतं, किं तत् ? इत्याह-अविरुद्धमदूष्य लौकिकमपि परदर्शनसत्कमपि न केवल निजमित्यपिशब्दार्थः, क्रियते विधीयते प्रासादकरणादि श्रीवत्सादिप्रासादविशानादि। आदिशब्दान्ङेपाविरुद्धपरिग्रह'। इदमत्र हृदय—यः किल लौकिकैर्निजदेवकुले वास्तुविद्योक्तप्रासादादि कार्यते सोऽस्माकमपि देवसदने विधीयते न तत्र मिथ्यात्व, मालापीयमस्माभिरस्मिन् आदिशब्दे क्षिप्यते, अतोऽनवद्येति गाथार्थः।

समाप्तोऽय मायमालाप्रतिपादक सप्तमोऽधिकार ॥

साम्प्रतमष्टमः—

चउवीसवट्टयाई पडिमाओ जिणाण केई वारिति।
तपि न जुत्तं जम्हा एए दोसा पसज्जन्ति ॥ ४३ ॥

व्याख्या—चतुर्विंशतिपट्टकादिप्रतिमा., आदिशब्दाज्जिनत्रयादिपरिग्रहः, प्रतिमा जिनप्रतिकृती., जिनाना तीर्थकृता केऽपि न सर्व्वे वारयन्ति निषेधयन्ति, नैताः क्रियन्त इत्यर्थ' तदपि न केवल पूर्वोक्तमित्यपेरर्थ., नेति निषेधे, युक्त सगतम्, यस्मादेते वक्ष्यमाणा दोषा दूषणानि प्रसज्यन्ते भवन्तीति गाथार्थ. ॥

पुव्वायरणभंगो- जिणाण आसायणा विपडिवत्ती,
सड्ढाभगो मुद्धाण होंति एमाइया दोसा ॥ ४४ ॥

व्याख्या—पूर्वाचरणाभङ्गो वहो. कालादिय प्रवृत्तिः तस्या विनाशः, जिनाना सर्वेनानामाशातना पूर्वकथितप्रकारेण, विप्रतिपत्तिर्विरोध –एको भणति मदीया श्रेष्ठाऽन्यश्च मदीयेत्येव लक्षणा, श्रद्धाभङ्गो भक्तिनाशो मुग्धाना मन्दमतीनाम्। ते ह्येवमध्यवस्यन्ति–हा ! किमस्माभिर्मन्दभाग्यैर्विधिमजानद्भिरेव प्रतिष्ठा कारिता इति भवन्ति जायन्ते एवमादय. उक्तप्रकारादयः, आदिग्रहणात्तदबहु मानपूजाद्यभावादयो वाच्याः। वकारोऽत्र प्राकृतान्लुप्तो द्रष्टव्य इति गाथार्थ ॥

सूत्रेणैव ससम्बन्धा गाथामाह—

किंचित्थ अत्थि जुत्तीवि पयडहरिभद्दसूरिवयणाओ
त च इम तिविहा खलु होइ पइट्ठा जिणिंदाण ॥ ४५ ॥

व्याख्या—अस्ति विद्यतेऽत्र चतुर्विंशतिपट्टकादिकरणे युक्तिरपि घटमाना वाक्यमपि न केवलमाचरणेत्यपिशब्दार्थ, प्रकटहरिभद्रसूरिवचनात् प्रसिद्धहरिभद्राभिधानाचार्यभणनात्, तदेवार्थत आह–तच्च तत्पुनर्भणनमिद वक्ष्य माण–त्रिविधा त्रिप्रकारा खलुर्वाक्यालङ्कारे, भवति प्रतिष्ठा जिनगुणाध्यारोपलक्षणा जिनेन्द्राणा मुनीशानामिति गाथार्थ ॥

तदेव त्रैविध्यमाह—

पढमा वत्तिपइट्ठा खेत्तपइट्ठा पुणो भवे बीया।
तइया महापइट्ठा तासिं वक्खाणमेव तु ॥ ४६ ॥

व्याख्या—प्रथमाऽऽद्या व्यक्तिप्रतिष्ठा, क्षेत्रप्रतिष्ठा पुनर्भवेत् द्वितीया, तृतीया महाप्रतिष्ठा, तासा प्रतिष्ठाना विवरणमेव वक्ष्यमाणप्रकारमेव। तुरेवकारार्थ। स च दर्शित इति गाथार्थ ॥

तदेव गाथाद्वयेनाह—

वत्तिविसेसो एगस्स जा उ पडिमा भवे जिणिंदस्स।
खेत्ते भरहे उसभाइयाण सव्वाण बीयाउ ॥ ४७ ॥
सव्वेसुवि खेत्तेसु जित्तियमित्ता भवंति तित्थयरा।
सत्तरसयसव्वाए महापइट्ठा इमा भणिया ॥ ४८ ॥

व्याख्या—सुगम।

यत एवं, अत उक्तिप्रत्युक्तिगाथामाह—

तो णज्जइ चउवीसट्टयाइकरणं अह विभिन्नकरणेवि ।
सहलं हविज्ज सच वित्ताइअभावकरणेव ॥ ४९ ॥

व्याख्या—तस्मात् ज्ञायते बुध्यते चतुर्विंशतिपट्टकादिकरण विधानम् । आदिशब्दान्उपप्रतिष्ठाग्रहः, तिकारवकारावत्र प्राकृतलक्षणेन लुप्तौ, अथेति पराभिप्रायदर्शकः, तच्चतुर्विंशतिपट्टकादिकरण विभिन्नकरणेपि पृथग्निष्पादनेऽपि न केवलमेकत्र विधाने इत्यपिशब्दार्थः, सफलं चरितार्थं भवेत् सत्यमवितथ, किन्तु वित्ताद्यभावाद् द्रव्यापरिपूर्त्तेः, आदिशब्दात्कस्यचिदेव समाधानादिपरिग्रहः, करण विधानमेवमुक्तप्रकारेण, अनुस्वारश्चात्र लुप्तो द्रष्टव्यः । पूर्व्वोक्तार्थसंवादस्तु उक्तः षोडशाख्यप्रकरणोक्तश्लोकैरिति बोद्धव्यः ।

" व्यक्त्याख्या खल्वेका क्षेत्राख्या चापरा महाख्या च ।
यस्तीर्थकृत् यदा किल तस्य तदाद्येति समयविदः ॥
ऋषभाद्यानां तु तथा सर्व्वेषामेव मध्यमा ज्ञेया ।
सप्तत्यधिकशतस्य च चरमेह महाप्रतिष्ठेति ॥
× × × × × ×
भावरसेन्द्रात्तु तथा महोदयाज्जीवताम्ररूपस्य ।
कालेन भवति परमा प्रतिबद्धा सिद्धकाञ्चनता ॥
वचनानलक्रियातः कर्म्मेन्धनदाहतो यतश्चैषा ।
इति कर्त्तव्यतयाऽत्र सफलैषाप्यत्र भावनिर्गौ ॥ "

इति गाथार्थः ॥

अत्रार्थे अन्यमतमुत्क्षिप्य परिहरन्नाह—

जंपि अहरुत्तरेण करणे आसायणा भणतन्ने ।
तंपि य न जुत्त सव्वे तुल्लगुणा जेण तित्थयरा ॥ ५० ॥

व्याख्या—यदपि अधरोत्तरेण आधाराधेयरूपेण करणाद्विधानादाशातना ज्ञानादिव्रुटिरूपा भणन्ति वदन्त्यन्येऽपरे, तदपि न केवल पूर्व्वोक्त नेति निषेधे युक्त सङ्गतम् । कस्माद् ? यस्मात्सर्व्वे समस्ता तुल्यगुणा अहीनातिरिक्तगुणा-

स्तीर्थस्रा', शाश्वतप्रतिमानुकार्यष्टमहाप्रातिहार्यसर्वज्ञप्रतिमाकरणे तु विप्रतिपत्ति रेव नास्त्यतो न तत्करण प्रति विचार इति गाथार्थः ॥

एव स्थिते जीवोपदेशमाह—

> मइमोह तो मा कुणसु जीव यदसु जिणिंदपडिमाओ ।
> जह तह पइट्ठियाओ इच्छतो सासय सोक्ख ॥ ५१ ॥

प्रकटार्था । नवर शाश्वतसौख्य निर्व्वाणसातमिति गाथार्थः ॥

चतुर्विंशतिपट्टकादिविचारणाष्टमोधिकार समाप्त ॥

इदानीं नवम. प्रारभ्यते ।

> सव्वपि अणुट्ठाण अविहिकय केइ पडिनिसेहति ।
> अस्सुयसुयपरमत्था जम्हा ण्य परूविति ॥ ५२ ॥

व्याख्या—सर्व्वमपि समस्तमपि न केवलमेकमित्यपिशब्दार्थः । अनुष्ठान प्रत्युपेक्षणादि साध्वपेक्षया, श्रावकापेक्षया च देवभवनकरणादिक, अविधिकृत-अयथोक्त किञ्चिदविसवादरूप केऽपि स्तोका प्रतिनिषेधयन्ति निवारयति । हेतुद्वारेण विशेषणमाह-अश्रुतश्रुतपरमार्था-अनाकर्णितसिद्धान्तरहस्या । ननु किमत्रासङ्गत ? अत आह-यस्मादेव वक्ष्यमाणन्यायेन प्रभवोऽस्मत्पूज्या श्रुते प्रतिपादयन्तीति गाथार्थ ॥

तदेवाह गाथाद्वयेन—

> अविहिकया वरमकय अस्सुयवयण भणति समयन्नू ।
> अविहिकए पच्छित्त थाव अकए यह होइ ॥ ३१ ॥
> अकुणताउ कुणतो अविहीइवि होइ निज्जरा भागी ।
> किरियमेत्ता मत्ता जं विहिनिंदायगा लोए ॥ ५२ ॥

व्याख्या—' अविधिकृताद्वरमकृत-अयथोक्तविहितात्प्रशस्तमननुष्ठित ' अश्रुतिवचनमनागमिकप्रतिपादन, असूयावाक्य वा अक्षमाभणितिं भणन्ति समयविद सिद्धान्तज्ञा । किमिति ? यत अविधिकृते प्रायश्चित्त अपराधलक्षण स्तोक तुच्छ, अकृते अननुष्ठिते बहु प्रभूत भवति प्रायश्चित्तमिति ॥ अत्र हि प्रथ

विधीयते–विधिकरण, अविधिकरण, अकरणं च। तत्र यो विधिना विधत्ते स धन्य एव। द्वितीयस्तु विधिकारकादविधिकारको न्यूनो व्यवहारतः, अकार-कात्तोऽपि वरिष्ठः। एतदेव भावयन्नाह–अकुर्वन्नविधिनापि न केवलं विधिनेत्यपि शब्दार्थः, भवति निर्जराभागी कर्मक्षयकारकः। कियन्मात्राः सत्त्वा यस्माद्विधिविज्ञायकाः यथोक्तपरिज्ञानवन्तो लोके जगति भवन्तीति गाथाद्वयार्थः॥

अत्रैवार्थे यमाह–

लोयविरुद्धं चेय अविहीइ निसेहणं कुणताण।
उज्जुधम्मकरणहसणं इच्चाइ वयणओ सिद्धं॥ ६३॥

स्फुटार्था, नवरं–ऋजुधर्मकरणहसनं–मुग्धजनानुष्ठानावज्ञाकरणमिति गाथार्थः॥

एवं स्थिते जीवोपदेशमाह–

जम्हा विहिसद्दहणं सया कुणंतो करेसु करणिज्जं।
असुणियपरमत्थाणं वयणेसु जीव! मा सज्ज॥ ६४॥

इत्यविधिकरणविचारणो नवमोधिकारः।

दशममाह–

अमलियछेयगंथा केइ निसेहन्ति सिद्धबलिकरणं।
तंपि न जुत्तं जम्हा भणियं कप्पाइचुन्नीसु॥ ६५॥

व्याख्या–अमलितच्छेदग्रन्था–अनभ्यस्तोत्सारकशास्त्राः केपि निषेधयन्ति सिद्धबलिकरण–जिनेशबिम्बपुरतो राद्धबलिविधानम्। तदपि न युक्तं सङ्गतं, यस्माद्भणितमुक्तं–कल्पादिचूर्णोः, आदिशब्दादावश्यकचूर्णिपरिग्रह इति गाथार्थः।

तदुक्तमेवार्थत आह–

तं सित्थं जस्स सिरे दिज्जइ पसमंति तस्स वाहीओ।६६॥
पुव्वुप्पन्नाउ नवा न हुंति अन्नाउ छम्मासं॥

व्याख्या—तत्सर्वज्ञाग्रे बलिकृतगृहीत सिक्थ जनमतीत यस्य यस्य चिदनिर्दिष्टनाम्न शिरसि मस्तके दीयते स्थाप्यते, प्रशाम्यन्ति उपशम यान्ति तस्य शिरसि सिक्थविधातुर्व्याधयो रोगा , किंविशिष्टा ? इत्याह-पूर्वोत्पन्ना चिरप्ररूढा , नवा नूतना न भवन्ति न जायन्ते, अन्या पूर्वविलक्षणा कियत्काल यावत् ? इत्याह-षण्मास जनमतीत तथा च तत्रैव-" त आढग तदुलाण सिद्ध देवमल्ले राया वा रायामचे वा " इत्यादियावत्, " त तु सित्थं जस्स मत्थए छुब्भइ तस्स पुव्युप्पन्ना वाहीओ वसमती " त्यादि । अयमभिप्रायः— यदि राद्ध न स्यात्तत्सिक्थमिति नाभणिष्यत्, तथ सित्थं लवमात्रमिति वाच्य, तत्रस्यग्रन्थव्याहते । तथाहि-तत्र दुब्बलिखंडिय" इत्यादि सर्व्वं निष्पादनविधिं प्रतिपाद्योक्त-तत्र " सिद्धबलिं काऊणेति " । अत्र सिद्धशब्देन रन्धनमेव वाच्य, न पुनर्निष्पन्नविधे ( धि ) सर्व्वस्य पूर्व्वप्रतिपादितत्वात्, तस्मात् स्थितमत्र सिद्धो बलिः सर्व्वज्ञपुरतो विधीयते इति गाथार्थः ॥

सिद्धबलिविचारलक्षण समाप्तोय दशमोऽधिकार ।

अधुना एकादशो विधीयते—

उस्सग्गविहडियसुद्धबोहपसरा भणंति पच्चरे ।
पासत्थाइसमीवे सुत्ताईय न घेत्तव्व ॥६७॥

व्याख्या—उत्सर्गेण सामान्योक्तविधिना, ' विहडिय ' ति देशीशब्दो विनाशार्थे , ततो विनाशित शुद्धबोधप्रसर प्रधानप्रचरकाशलक्षणो येषा ते भणन्ति जल्पन्ति एव वक्ष्यमाणन्यायेनान्येऽपरे, तदेवाह-पार्श्वस्थादिसमीपे, तत्र पार्श्वस्थ उक्तलक्षण, आदिशब्दादवसन्नादिग्रह , तेषा निकटे सूत्रादिकम्, आदिशब्दादर्थादिग्रह, न ग्रहीतव्य न स्वीकर्त्तव्यमिति गाथार्थः ॥

अत्रोत्तर—

तमवि न छेयगथाणुसारिवयण जओ जइ दिस्स ।
भणिय निसीहगथे उस्सग्गववायजलहिम्मि ॥ ६८ ॥

व्याख्या—तदपि सूत्रादिनिषेधवचन न केवल पूर्वोक्तमित्यपि शब्दार्थः, न नैव छेदग्रन्थानुसारि वचन-उत्साहकआसन्नादि भणनम् , यस्मा

यतिं साधुमुद्दिश्याश्रित्य भणितमुक्तं निशीथग्रन्थे प्रकल्पशास्त्रे, किंविशिष्टे ? उत्सर्गापवादजलधौ-सामान्यविशेषनीरधौ इति गाथार्थः ॥

तदेवाह—

संविग्गमसंविग्गे पच्छाकडसिद्धपुत्तसारूवी ।
पडिक्कन्ते अब्भुट्ठिए असई अन्नत्थ तत्थेव ॥ ६९ ॥

सुगमा । भावार्थस्तु कथ्यते—प्रथम संविग्नस्योद्यतस्य सूत्रार्थनिपुणस्य समीपे साधुभिः श्रोतव्यं, तदभावेऽसंविग्नस्यापि गीतार्थस्य, तस्याप्यभावे पश्चात्कृतस्यामुक्तलिङ्गस्य, स च द्विरूपो भवति—एकः सिद्धपुत्रोऽन्यश्च सारूपी। अनयोश्च स्वरूपमाभ्यामुक्ताभ्यामवगन्तव्यम् ॥

" सभज्जओ वावि अभज्जओ वा नियमेण दोसुक्किलवत्थधारी ।
खुरेण मुंडो असिही सिही वा अदंडपत्तो विय सिद्धपुत्तो ॥
मुंडसिरो दोसुक्किलवत्थधरो न विय वधए कच्छं ।
इंडइ नवा अभज्जो सारूवी एरिसो होइ ॥ "

एतयोश्च देशना कृत्वाऽभ्युद्यमं कार्या, यदि कुरुतस्ततो लष्टं, न चेत्, ततोन्यत्र नीयेते, यदि न गच्छतः ततस्तत्रैव सिद्धान्तोक्तविधिना तत्समीपे पठितव्यम्, पठद्भिश्च यदि निर्वाहो न भवति तयोस्ततः स्वयं सर्वं करणीयं, श्रावकाश्च कारयितव्याः। तथा च तत्रैव निशीथे भणितं—

" चोयइ से परिवारं अकरिंते वा भणाइ तो सड्ढे ।
अव्वोच्छित्तिकरस्स उ सुयभत्तीए कुणह पूयं ॥ "

तथा उपदेशमालायां सुगडमग्गपदवं—" इत्यादि, अकरणे च प्रायश्चित्तं भणितमिति भावार्थ इति गाथार्थः ॥

एवं स्थिते जीवोपदेशमाह—

ता सिद्धिनयरसम्मग्गपयडणे नाणमणिपईवम्मि
कुणसु पयत्तं रे जीव ! मच्छरं चइय सव्वत्थ ॥ ७० ॥

व्याख्या—तस्मात्सिद्धिनगरसन्मार्गप्रकटने मोक्षपुरपद्वीप्रकाशके ज्ञानं श्रुतज्ञानं तदेव वाताद्यक्षोभ्यत्वेन प्रकाशकत्वेन च मणिप्रदीपः तस्मिन् कुरु

विधेहि मयत्नमादर रे जीव ! भो आत्मन् मत्सर रोष त्यक्त्वा मोज्झ्य सर्व्वत्र पार्श्वस्थादिसमीपे। किञ्च श्रावकान् पार्श्वस्थादिसमीपे शृण्वतो वारयन्ति, स्वय च पूर्वोक्तयुक्त्या निष्कारण नित्य श्रावकधर्म्मकथनेन पार्श्वस्था भवन्तोऽपीत्थ जल्पन्ति,अहो मोहविलसितमिति अवस्थितोऽयमस्मदुक्तो जीवोपदेश इति गाथार्थः॥

पार्श्वस्थादिसमीपश्रवणादिविचारवर्णनोऽयमेकादशोऽधिकार ॥

इदानीं द्वादशो वर्ण्यते—

अइगरुयमच्छरेण निवबलओ करिय केई चेइहर ।
विहिचेइयति पभणन्ति माणिणो अविहिकरणेवि ॥ ७१ ॥

व्याख्या—अतिगुरुकमत्सरेण-गुरुतरकालुष्येण अनुस्वारोऽत्र पूर्व्ववत्, नृपबलतश्च नरेशबलेन कृत्वा विधाय केप्येके चैत्यगृह देवसदन विधिचैत्यमागमोक्तमित्येव प्रभणन्ति प्रजल्पन्ति मानिनोऽहङ्कारिण', अविधिकरणेपि-आगमोत्तीर्णविधानेऽपि । नहि मत्सरतो नृपबलतश्च चैत्यविधानमागमे भणितमिति गाथार्थ' ।

एतच्च सङ्गतमसङ्गत वा ? इत्यत्राह—

धम्मुज्जयाण नो देइ तपि मणयपि स पसुल्लास ।
रागदोसविहाडणपडुओ जम्हा विही भणिओ ॥ ७२ ॥

व्याख्या—धर्म्मोद्यताना तपोत्साहवता नो नैव ददाति प्रयच्छति तदपि एव चैत्यकरणमपि मनागपि स्तोकमपि न केवल प्रभूतमित्यपेरर्थ , मान सोल्लास चित्तोत्साह, तस्माद्रागद्वेषविघटनपटुक' स्नेहरागविनाशदक्षो यस्मा द्विधिश्चैत्यमन्दिरकरण, दीर्घत्व चात्रपूर्व्ववत् भणितः प्रतिपादित आगमे इति गाथार्थः ॥

व्यतिरेकमाह—

जत्थ पुण रायरोसाण पगरिसो तत्थ धम्मधणनासो ।
'विहि विहि' पभणताणवि ज सुत्ते भणियमेवत्ति ॥ ७३ ॥

व्याख्या—यत्र पुनारागद्वेषयोरुक्तलक्षणयो' प्रकर्ष' प्रागल्भ्य तत्र धर्म्मधननाशो तृपद्रव्याभाव , 'विधि विधि' प्रभणतामपि । अयमाशय.-विधो

विधि जल्पन्तु, अविधौ तु विधिं जल्पन्तो न भान्ति इत्यस्यार्थस्यामूयाख्या- पनार्थं वीप्साभणन विधिर्विधिरिति, नहि वचनमात्रेण विधिर्भवति, किन्तु शास्त्रोक्तप्रकारेण, स च "अहिगारी तु गिहत्थो–" इत्यादि सर्वजनप्रतीत एवेति । किमिति यस्मात्सूत्रे निशीथे भणितमुक्तमेवं वक्ष्यमाणन्यायेन इतिर्वा- क्यसमाप्ताविति गाथार्थ ॥

तदेवाह—

> जं अज्जिय समीपल्लगहि तवनियमबंभमइएहि ।
> मा हु तयं कलहंता छड्डिहह सागपत्तेहि ॥ ७४ ॥

अस्यार्थो निशीथोक्तकथानकादवसेयः । तच्चेदमर्थतः–" केनचिद् ब्राह्मणेन महादारिद्र्यभराक्रान्तेन देशान्तराण्यटता कश्चिद् दृष्टप्रत्ययः सिद्धो दृष्ट । ततः क्षितितलन्यस्तमस्तकप्रमाणपूर्व्वकं विज्ञप्तोऽसो, यथा भगवन् ! त्वत्प्र- सादेन मम दारिद्र्य यास्यतीति । तेनापि विनीत दुःखित च मत्वा प्रत्युक्तः– यथा वत्स ! मम पृष्ठतो लग्नः समागच्छ, येनापनयामि ते दारिद्र्यम्, एवमुक्त्वा नीतोऽसौ तेन रसकूपिकाद्वारसमीपे भणितश्चैवम्–अस्या रसकूपिकाया सिद्धः सुवर्णरसास्तिष्ठति, स च त्वया शमीवृक्षपत्रपुटकेनानिर्विण्णेन स्तोक गृहीत्वा तुम्बकमिद पूरणीयम्, भृते चास्मिन् वस्त्राचालनेन मम सज्ञा विधेया, येना- कर्षयाम्यहम्, ततः सुवर्ण कृत्वा दारिद्र्यस्य जलाञ्जलिं दापयिष्यामीति भणित्वा तुम्बकमर्पयित्वा क्षिप्तोऽसौ । वरत्रया तन्मध्ये तेनापि तथाकृते आकृष्टोऽसौ, गदितश्च–वत्स ! दुरापोऽय रसः, अतः प्रयत्नेन रक्षणीय', तेनापि भणितमेव- मिति । ततश्चलितौ द्वावपि नगरसम्मुख, ततो भूयोभूयस्तेन तथैव तस्याटवी- मध्ये समागच्छता शिक्षा दत्ता । स च पुन पुनर्भणनेन रुष्टः सन् शाकवृक्षपत्र- पुटेन त रसमेकवारेण भूमौ विससर्ज । ततश्च सिद्धेन भणितो हहो मन्द- भाग्य ! किमिद चेष्टित, अचिन्त्यचिन्तामणिकल्पमाहात्म्य सुवर्णरस प्राप्यैव त्यजसि, अयोग्योऽसि सम्पदस्त्वमिति भणित्वा समीहित स्थानं गतः सिद्धः। सोपि विलक्षवदनोऽपरिपूर्णेच्छ स्वगृह प्राप्तो त्रिविधाधिव्याधीनाञ्च भाज नमिति दृष्टान्तः ॥

दार्ष्टान्तिकयोजना चैव-दारिद्र्यतुल्यः साध्वादिः, सिद्धसदृश आचार्यादिः, काञ्चनरससन्निभ धर्म्मोपार्जन, "गवीपत्रपुटाभास्तपोनियमगुणाः", अलाबूसदृश देह, सिद्धशिक्षासन्निभा आचार्याद्युपदेशा", श्वाकुपनपुटसन्निभ कलह, तेन हि क्षणित्येव प्राणी चिरोपार्जित धर्म्मरसमात्मन. स्फोटयति। अन्याप्यत्र योजना स्वबुद्ध्या योजनीया सम्भविनीति गाथार्थ ॥

ननु सामान्यधर्म्मोऽपयातु, तपःप्रभृतिभिस्तु विशिष्टानुष्ठानैरुपार्जितो धर्म्मे कलह कुर्वतामपि त्राणायास्माक भविष्यति इति यो मन्येत त शिक्षयितु सदृष्टान्तामुपदेशपदोक्ता गाथामाह—

तवसुत्तविणयपूया न संकिलिट्ठस्स हुंति ताणाय।
खवगागमविणयरओ कुंतलदेवी उदाहरण ॥७०॥

व्याख्या—तपःसूत्रविनयपूजा. मनीता", न नैव सक्लिष्टस्य रागद्वेषाभिभूतस्य जन्तोर्भवन्ति जायन्ते त्राणाय। अत्रार्थे यथाक्रम क्षपरो विकृष्टतपस्वी, आगम इत्यागमज्ञ. सूरि, विनयरत एवनामा साधु", कुन्तलादेवी उदाहरण दृष्टान्ता इतिगाथाक्षरार्थ.। भावार्थस्तु कथानकेभ्योऽवसेयः। तानि चामूनि सक्षेपत"—

" अस्ति पाटलिपुत्र नाम नगरम्। तत्र कदाचिन्मित्रविहारेण विहरन्न मिशिखनामा क्षपको वर्षावासार्थं समागत। तेन चैकस्य गृहपतेरनुज्ञाप्य गृहे वसतिर्गृहीता। इतश्चान्योपि तत्रैव लिङ्गोपजीवी अरुणाभिधान साधु समायात"। सोपि तस्यैवागारिण समीपे वसति याचितवान। तेनापि नान्या समस्तीति अभिधाय पूर्वोक्तक्षपकर्षिगृहद्वितीयभूमिकाऽनुज्ञाता। तत" स तस्यां स्थित। एव च तयोस्तत्र वसतो क्षपकस्येतर प्रति पापो दुरात्मा नित्यभोजी ममोपरि निवसतीति मत्सरो बभूव, इतरस्य तु क्षपकस्य तप शक्ति वीक्ष्याधन्योऽह ओदनमुण्ड" पापात्मा यो गुणवत तपस्विन उपरि स्थित आशातना नित्य करोमि (इति) संवेग समजनि ततश्च विशुध्यद्रसायनवशात" क्षपकेण भवगृद्धि कृता अरुणेन च भवह्रास। तौ च वर्षाकालातेऽन्यत्र विहृतौ। अत्रान्तरे तीर्थंकर स्तत्र समवसृत.। देवैश्च समवसरण कृतम्। उपविष्टे च तस्मिन् भगवति तत्रत्या लोका महासमृद्ध्या तद्वन्दनार्थं गताः। यथावि यभिवन्द्य,तद्देशना श्रुत्वा प्रस्तावे

क्षपकर्षर्दुष्करतपःकरणाकृष्टमानसैस्तैर्भगवान् पृष्टः । स्वामिन् ! कियती कर्म्मनिर्ज्जरणा क्षपकर्षिणा कृतेति ? भगवतापि कथितः पूर्व्वोदितो भवद्वार्द्धिलक्षणः सङ्क्लेशाद्वृत्तान्तः, इतरस्य च तद्विपरीतः । श्रुत्वा विस्मितमानसो लोको भगवन्तमभिवन्द्य स्वस्थानं गतः ॥ " इति क्षपकर्षिकथानकम् ॥

इदानीमागमज्ञकथानकम्—

" एकस्मिन् गच्छे आगमज्ञः सूरिरभवत्, परं क्रियायां मन्दादरः । अन्योऽपि तत्रैव क्षुल्लको ज्ञानवान्, ततस्तमनुयोगधरमाचार्यं मुक्त्वा क्षुल्लकसमीपे श्रावका सिद्धान्तश्रवणं कुर्वन्ति, बहुमानं च तदुपरि । एवं व्रजति काले आचार्यस्य क्षुल्लकोपरि मत्सरो जातः, अहो ! दुरात्माऽयं यो ममैवमवज्ञां करोतीति। अन्यदा च दुर्निवारत्वाद्यमभयानां तन्मत्सरानिवृत्त्या पञ्चत्वं गतः सूरिः, उत्पन्नश्च पन्नगत्वेनोद्याने । तस्मिंश्च साधवः तत्क्षुल्लकसहिताः समागताः । ततः स्वाध्यायभूमौ स क्षुल्लकश्चलितः, दृष्टस्तेनामर्षेण, धावितः क्षुल्लकसम्मुखं, वारितो बृहद्यतिभिः । ततः कञ्चित्कालं छन्नः स्थितः, स्वाध्यायार्थं भूयोपि क्षुल्लकः (केन) स्वाध्यायभूमौ (गम)नं कुर्व्वता पुनः स सर्पोऽवलोकितः । आगत्य च तद्वृत्तान्तं गुरोर्न्यवेदयत् । ततस्तैः सामान्येनैवमवगतं—कश्चिद्विराधितश्रामण्यः साधुप्रद्वेषी भविष्यत्येष इति । अन्यदा तस्मिन् विषये केवली समायातः, पृष्टश्च तद्वृत्तान्तः कथितः, ततस्तेषां साधूनां संवेगो जातः । केवलिवचनाच्च गत्वा तदुद्यानं पूर्व्वभववृत्तान्तमावेद्य क्षामितोऽसौ । तस्य च क्षामणे कृते सति जातिस्मरणं समुत्पन्नं, संवेगं च गतः, आराधकश्च जातः ॥ " समाप्तमागमज्ञसूरिकथानकम् ॥

साम्प्रतं विनयरत्नकथानकं, तच्च प्रतीतत्वान्न कथ्यते । स चात्र विनयरतो गदितो य उपदेशमालायामुदायिनृपवधकः, तस्य विनयो निष्फलो जातः । यतोऽसौ तादृशं पापं कृत्वा नरकं गतः । इति विनयरतकथानकम् ॥

इतः कुन्तलादेवीकथानकं भण्यते—"कस्यचिन्नरपतेः कुन्तलदेव्यभिधाना पट्टराज्ञी बभूव । सा च शेषराज्ञीमत्सरेण सर्व्वज्ञमन्दिरे तत्कृतपूजातः स्नानविलेपनवासधूपवस्त्राभरणामिषरथयात्रास्नात्रादिकां पूजां जिनप्रतिकृतीनां कारितवती । एवं व्रजति कालेऽशुभकर्म्मोदयात्तस्याः कश्चिदसाध्यो रोगो जातः

जीवितशेषा च सञ्जाता। ता चैवं दृष्ट्वा पूर्व्वदत्त पट्टरत्न-द्विती(या)मनेन सर्व्वमाभरणवस्त्रादि तत्पार्श्वाद् गृहीत्वा राजादेशेन नियोगिभीर्नृपतेर्भाण्डागारे क्षिप्तम्। ततस्तस्यास्त पराभव मन्यमानायाः आर्त्तध्यानमभूत्। तत्परिणता च मृता सती शुनीत्वेनोत्पन्ना। अन्यदा तत्र केवली समायातः। स भगवान् अन्तःपुरिकाभि सपत्नीभिः कुन्तलदेव्या उत्पत्तिं पृष्टः। भगवतापि वृत्तान्ते कथिते तासा ससारविरक्तिर्जाता। ततस्ताभिर्गत्वा दृष्ट्वाऽसौ शुनी सस्नेह पुष्पचन्दनविशिष्टाहारदानादिभिः पूजिता। ततोऽस्या मण्डल्या पूजादिक सभ्रम जिनमन्दिर च दृष्ट्वा जातिस्मरण सम्पन्न बोधिश्च। क्षामितायाश्च ताभिः कषायोपशमे आराधना जाता। इति कुन्तलदेवीकथानकम्॥

इत्थ स्थिते जीवोपदेशमाह—

ता जइ कुणति केइ तुह वयण देसु तेसु उवएस।
अह नो कुणति रे जीव रमसु नो जत्थ रागाइ ॥७६॥

व्याख्या—तस्माद्यदि कुर्वन्ति विदधति केपि तव भवतो वचन वाक्य, देहि प्रयच्छ तेषु वचनकर्तृषु उपदेश—'मा सद्वेश कुरुत भो भव्याः' इत्येवरूपवाक्यपद्धतिं, अथेति विकल्पार्थः, नो नैव कुर्वन्ति तेषु रे जीव! भो आत्मन्! रमस्व क्रीड, नो नैव यत्र देवभवनकरणादौ रागादयः आदिशब्दाद्द्वेषादिग्रह इति गाथार्थः॥

विधिचैत्यकरणवर्णनोऽय समाप्तो द्वादशोऽधिकार ॥

इदानीं त्रयोदश—

केणवि गुणेण दसणपभावग पिच्छिऊण आयरिय।
केई कसायनडिया तंपि हीलति मूढमई ॥७७॥

व्याख्या—केनापि अनिर्दिष्टनाम्ना गुणेन 'जीवस्य' निर्मलीकरणस्वभावेन दर्शनप्रभावक-सर्व्वज्ञशासनप्रकाशक प्रेक्ष्य अवलोक्याचार्य सूरिं केपि न सर्व्वे, कषायनटिताः क्रोधाद्यभिद्रुता तमपि दर्शनप्रभावक न केवलमन्यमित्यपिशब्दार्थः, हीलयन्ति तिरस्कुर्व्वन्ति मूढमतय कुबोधाच्छादितधिषणा इति गाथार्थः॥

अमुमेवार्थं सिद्धान्तभणित्या निवारयन्निदमाह—

कप्पम्मिवि भणियमिणं सूरीणामासायगा इमे भणिया।
जे सयलजणसमक्खं भणंति एवं अहम्माणी ॥ ७८ ॥

व्याख्या—कल्पेपि छेदग्रन्थे, न केवल शेषशास्त्रेष्वित्यपिशब्दार्थ, भणितमुक्तमिद पूर्वोक्तम्, कथम्? इत्याह—सूरीणामाचार्याणाम।शातका अवज्ञाकारका इमे वक्ष्यमाणा भणिताः प्रतिपादिता., ये अनिर्दिष्टनामानः साध्वादयः सकलजनसमक्षं समस्तलोकप्रकट भणन्ति वदन्त्येव वक्ष्यमाणनीत्या अहंमानिनः आत्मोत्सेकिन इति गाथार्थः ॥

कल्पोक्तमेवाह—

इड्ढिरससायगरुया परोवएसुज्जया जह मखा।
अत्तट्ठघोसणरया घोसिंति दीया व अप्पाण ॥ ७९ ॥

व्याख्या—ऋद्धिरससातगुरुका गौरवत्रयवन्तः परोपदेशोद्यता अन्यधर्म्मकथननियुक्ता मखा इव विचित्रफलकग्राहिनरविशेषा इव, यथाशब्द उपमानार्थः, स च योजितः। एवमभिप्रायः-मखो हि परेभ्यः कथयति स्वय च न करोति, एवमेतेऽपि आत्मार्थघोषणरताः स्वकार्यप्रतिपादनसक्ताः घोषयन्ति उपदिशन्ति द्विजा इव ब्राह्मणा इवात्मान स्वमेव वदन्तः आचार्याशातका इति हृदयमिति कल्पगाथार्थः ॥

अन्यवार्थे ससम्बन्धा किञ्चिन्न्यूना गाथामाह—

अन्न च एत्थ दोसो लोयविरुद्ध हविज्ज इय वयणं।
रीढा जणपुज्जाणं वयणाउ—

व्याख्या—अन्यचेत्यभ्युच्चये, अत्र-आचार्यावर्णवादकरणे दोषो दूषण लोकविरुद्ध जननिन्द्य भवेज्जायेतेति वचनम्—एव प्रतिपादन, कस्मात्? रीढा अवज्ञा जनपूज्याना लोकमान्याना, वचनात्—पञ्चाशकभणनात्। तत्र हि लोकविरुद्धानि प्रतिपादयता भणित—"उज्जुधम्मकरणहसण रीढा जणपूयणिज्जाण" इति किञ्चिदूनगाथार्थः ॥

एवं स्थिते जीवोपदेशं सार्द्धकगाथया माह—

ता तुमं जीव ॥ ८० ॥

मा मा कुणसु अवन्न सयावि तेसि कसायनडिओवि ।
जेण भवपंजराओ मुचासि निस्संसय भत्ति ॥ ८१ ॥

व्याख्या—तस्मात्त्वं जीव ! मा मा कुरु अवज्ञां सदापि तेषां दर्शन प्रभावकाचार्याणां कषायनटितोपि, येन भवपञ्जरात् मुच्यसे निस्संशयं झगितीति गाथासंस्कारार्थः ॥

इति दर्शनप्रभावकाचार्यविचारवर्णनस्त्रयोदशोऽधिकारः

अधुना चतुर्दशः मारभ्यते—

तित्थयरवदणिज्ज संघंपि खिवेइ कोइ अइयालो ।
नत्थि संघो एसो भणिओ आसायगो कप्पे ॥ ८२ ॥

व्याख्या—तीर्थंकरवन्दनीय सर्व्वज्ञवन्द्य "नमो तित्थस्स" इति भणनात् संघमपि-साधुसाध्वीश्रावकश्राविकाख्य ज्ञानादिगुणरूप न केवलमाचार्यादीत्यपेरर्थ, क्षिपति तिरस्कुरुते कोपि कश्चिद्, एकारश्चात्र "स्वरोऽन्योन्यस्य" इति प्राकृतभव., अतिवालो महामूर्खः, कथ क्षिपतीति चेत्, अत आह—नास्ति न विद्यते संघ उक्तरूप, एष सङ्घक्षेपको भणित उक्त आशातकोऽवज्ञाकारक. कल्पे छेदग्रन्थे इति गाथार्थ. ॥

कल्पभणितमेवाह—

अक्कोसतज्जणाई संघमहिक्खिवइ संघपडिणीओ ।
अन्नेवि अत्थि संघा सियालणतिक्कमाईण ॥ ८३ ॥

व्याख्या—आक्रोशतर्ज्जनादिभिस्संघ-साध्व्यादिवर्गं, अधिक्षिपति निराकरोति सङ्घप्रत्यनीक प्रवचनप्रतिकूल, तत्राक्रोशो दुष्टवाग्भणन, तर्जन तु त्वमनेन सिद्ध्यतिनेत्येवमादि भणति। आदिग्रहणान्निरवधिचिरयविनयाद्यकरणग्रह', विभक्तिलोपाश्चेत्थ निर्देशः। एव च वदन सङ्घ क्षिपतीत्याह-अन्येऽपि-परे, न केवलमय साध्व्यादिवर्ग इत्यपेरर्थ. । सन्ति विद्यन्ते सङ्घा समुदायरूपा,

केपामित्याह–' सियालणतिकमाईणं ' तत्र शृगालः प्रतीतः, 'णंतिके' ति देशीभाषया कोलिकः, आदिशब्दाच्छेपजन्तुपरिग्रहः। मकारोऽत्रालाक्षणिक इति गाथार्थः ॥

पुनरपि संघस्य पूज्यतां दर्शयन्निदमाह—

उग्घाडणाभणणं सुयकेवलिणावि मन्निओ संघो।
पुव्वाणं परिवाडीं देहि भणतो महासइणा ॥ ८४ ॥

व्याख्या—उद्घाटना समयभाषया सङ्घाद्बहिष्करणलक्षणा तस्या भय तेन, अनुस्वारश्च पूर्ववत्, श्रुतकेवलिना चतुर्दशपूर्व्वधरेण न केवल तीर्थंकरेणेत्यपेरर्थः मानितः पूजितः सङ्घः प्रतीतः पूर्व्वाणां समयप्रसिद्धानां परिपाटीं पाठरूपां देहि प्रयच्छ ' शिष्येभ्यः ' इत्यध्याहारः, भणन् ब्रुवन्, किंविशिष्टेन ? महातिशयिना अचिन्त्यशक्तिना। अत्र च " कगचजतद० " इत्यादिना तकारलोपे " स्वरे प्रकृतिलोपसन्धयः " इत्यनेन तकारस्येकारलोपे रूपमिद। इदमिह तत्त्व–किल श्रीवीरस्वामिनो मोक्ष गतस्य दुष्कालो महान् सवृत्तः। ततः सर्व्वोपि स मुवर्ग एकत्र मिलितो भणित च परस्पर, कस्य किमागच्छति सूत्र ? यावन्न कस्यापि पूर्व्वाणि समागच्छन्ति। ततः श्रावकैर्विज्ञाते भणित तैः, यथा कुत्र साम्प्रत पूर्व्वाणि सन्ति। तैर्भणित- भद्रबाहुस्वामिनि। ततः सर्व्वसङ्घसमुदायेन पर्यालोच्य प्रेषित तत्समीपे साधुसङ्घाटकः, गत्वा प्रणम्य च तेन भणिताः सूरयो यथा सुशिष्याणां पूर्व्वपाटीं प्रयच्छत। तैरुक्त–साम्प्रत वय महाप्राणध्यानसक्ताः ततो न ता दातुं शक्ता इत्युक्ते समागत साधुसङ्घाटकः। सघसमीपे कथित। तद्वचनतो भूयोऽपि प्रेषित, य संघवचो न कुरुते तस्य किं विधीयते ? एव गत्वा ब्रूत। तथा कृते तैरुक्त–यः सङ्घो भणति तदहं करोमीत्युक्ते प्रेषितानि स्थूलभद्रप्रमुखाणि सुशिष्याणां पञ्चशतानीति गाथार्थः ॥

ननु न वय संघ निराकुर्म्मः, किन्त्वास्माकीन सङ्घो नान्येषामिति ये मन्येरन् तान्प्रत्याह—

अम्हाण चिय संघो अन्नाणं न उण-लक्खणाभावा।
नेव वोत्तुं जुत्तं छउमत्थाण जओ भणिय ॥ ८५ ॥

व्याख्या—अस्माकमेव सद्घ अन्येषामपरेषा न पुन , लक्षणाभावात् ज्ञानाद्यसत्तात , नैवमित्थ वक्तु मदितु युक्त सङ्गत छद्मस्थानामतीन्द्रियज्ञानाभाववता, यतो यस्माद्भणितमुक्तमागमे इति गाथार्थ ॥

तदेवाह—

परमरहस्समिसीण सम्मत्तगणिपिडगभरथसाराण ।
परिणामियं पमाण निच्छयमवलंबमाणाण ॥ ८६ ॥

व्याख्या—परमरहस्य प्रधानतत्त्व ऋषीणां साधूनां समाप्तगणिपिटकाभ्यस्तसाराणां परिपूर्णद्वादशाङ्गज्ञाततत्त्वाना परिणामिकमाभ्यन्तरचित्तरूप प्रमाण व्यवस्थापक, निश्चय व्यवहारप्रतिपक्षमवलम्बमानानामाश्रयताम् । इदमिह तत्त्व-बहिर्वृत्त्याऽन्यथापि प्रवृत्तिर्भवतु, परिणामशुद्धौ ज्ञानादीनि निश्चयनयात् भवन्त्येव । व्यवहारतस्तु ज्ञानदर्शने चारित्राभावेपि कस्यचित् भवत' कस्यचिन्नेति । " ववहारस्स उ चरणे हयम्मि भयणा उ सेसाण । " इत्यादि वचनत सिद्धमिद केचित्सम्पूर्णानुष्ठानिनोऽपि सघमध्ये दृश्यन्ते, तेषां ज्ञानादित्रयमप्यस्ति, अतो लक्षणाभावत्वस्य हेतोरसिद्धत्वात् सिद्ध विवक्षित सघस्य गुणवत्त्वमिति गाथार्थ ॥

एव स्थिते जीवोपदेशमाह—

सघस्सोवरि वयण किंपि मा भणसु जीव ! पडिकुट्ठ ।
जइ तित्थकरवयण मणसि भावेण सपत्त ॥ ८७ ॥

प्रकटार्थो ॥

सघविचारवर्णनोऽय चतुर्दशोऽधिकार समाप्त ॥

इत पञ्चदशो भण्यते—

सुविहियमिह मन्नता अप्पाण केइ मंदधम्माणं ।
खेत्तेसु इति दूसिंति ते उ नेय वर जम्हा ॥ ८८ ॥

व्याख्या—सुविहित सुयतिमिति मन्यमाना इत्यमध्यवस्यन्त आत्मान स्व केप्येके मन्दधर्माणां पार्श्वस्थादीना क्षेत्रेषु तद्ग्रामादिषु ' इति ' त्ति

देशीभापया आगछन्ति, दूषयन्ति च निन्दन्ति तान् पार्श्वस्थादीन्। तुस्समुच्चय-चकारार्थः, स च दर्शित एव, नेति निषेधे, इद गमनादि वरं प्रधान यस्मात् तदनुवृत्त्यादिना तत्र स्थातव्यं कारणेनागतैरितरथा दोष इति गाथार्थः॥

अस्यैवार्थस्य साधनार्थमुपदेशपदोक्त गाथाद्वयमाह—

अगीयाढाइन्ने खेत्ते अन्नत्थ ठिइअभावम्मि ।
भावाणुवघायणुवत्तणाए तेसिं तु वसियव्वं ॥ ८° ॥
इयरा सपरुवघाओ उच्छोभाईहिँ अत्तणो लहुया ।
तेसिंपि पावबधो दुगपि एय अणिट्ठं तु ॥ ९० ॥

व्याख्या—अगीताद्याकीर्णे श्रुतार्थानभिज्ञपार्श्वस्थाद्याकुले क्षेत्रे ग्रामादौ अन्यत्र नगरादौ निर्व्वाहाभावतः स्थित्यभावे अविद्यमानवासे भावानुपघातानुवर्तनया चित्तासङ्क्लेशेनानुकूल्येन च तेषा अगीतादीना तु पादपूरणे वस्तव्यम्। व्यतिरेकमाह-इतरथा ऽनुवर्त्तनाद्यभावे स्वपरोपघातः—आत्मान्यसङ्क्लेशः, 'उच्छोभाईहिं' ति असद्दोषाविष्करणादिभिः, आदिशब्दादपकारादिग्रहः, आत्मनः स्वस्य लघुता माहात्म्याभावः, तेषा पुनरगीतादीनामपि, तु पुनरर्थः, स च योजित एव, पापबन्धः कलुषोपचयः।, द्वयमप्येतत् पूर्व्वोक्त मनिष्टमेव। तुरेवकारार्थः, स च दर्शित एव। न चैतदनार्ष, प्रकरणोक्तत्वात्। यतो निशीथे भणितं-" खेत्त तु ओसन्नाइ भावियं तत्थ तयाणुवत्तीए वसियव्वं " तथा पञ्चकल्पेऽपि भणितं-" अणायथण वज्जयतेण विहारो कायव्वो। के उण अणायणा ? भन्नइ-पासत्थाइणो कुलिंगिणो य। " एतच्च विशुद्धयत्यपेक्षया बोद्धव्यम्। ये पुनः पूर्व्वोक्तयुक्त्या पार्श्वस्थादयः सुतरां विवाद एव न कार्य इति गाथाद्वयार्थः॥

एवं स्थिते जीवोपदेशमाह—

जइ जीव ! हियच्छेसी तुम तओ कुणसु अप्पणो इट्ठं ।
अणुयत्तणाइजुत्तो पासत्थाईसु तक्खित्ते ॥ ९१ ॥

व्याख्या—यदीति रुच्यर्थः, जीवात्मन् ! हितैषी धर्म्मगवेषकस्त्वं भवान् ततस्तस्मात् कुरु विधेहि आत्मनः स्वस्येष्ट प्रत्युपेक्षणादि व्यापारम्।

किंविशिष्ट'? अनुवर्तनादियुक्तः—आनुकूल्यानुपघातसहित', केषु? पार्श्वस्थादिषु मतीतेषु तत्क्षेत्रे पार्श्वस्थादिमचुरग्रामादाविति गाथार्थः ॥

पार्श्वस्थाद्यनुवर्त्तनावर्णनोऽय पञ्चदशोऽधिकार समाप्त ।

पढइ नटो वेरग्ग इच्चाई दंसिऊण केइत्थ ।
नाणज्झाणमवन्न कुणंति नेय वियाणंति ॥ ९२ ॥

व्याख्या—पठति नटो वैराग्यमित्यादि निदर्श्य कथयित्वा, आदिशब्दात् "निव्विज्जेज्जा य बहुजणो जेण पढिऊण त तह सढो जालेण जल समोयरइ" इति दृश्य, सुगम च, येऽपि स्तोका अत्र जिनमवचने, अत्र एकारा कारलोपे पूर्व्ववत् रूपमिदम्, ज्ञानाख्याना वद्वागमानामवज्ञामश्लाघादिरूपां कुर्व्वन्ति विदधति, नेति निषेधे, इमश्च वक्ष्यमाण विजानन्ति बुध्यन्त' इति गाथार्थः ॥

तदेवाह—

नाणाहिओ वरतर हीणोवि हु पवयणं पभावितो ।
न य दुक्कर करिंतो सुट्ठुवि अप्पागमो पुरिसो ॥ ९३ ॥

सुबोधार्था ।

तथा—

छट्ठट्ठमदसमदुवालसेहिं अबहुसुयस्स जा सोही ।
एत्तो बहुयरिया पुण हविज्ज जिति(मि)यस्स नाणिस्स ॥ ९४ ॥

इयमपि सुगमा ।

ननुपद्येवं तर्हि पूर्व्वोक्तस्य व्याहति', सत्य, तन्निन्दावाक्यमेवमसौ भण्यते; येन क्रियायामुद्यम करोति, नचासौ गुणविकल, कथमन्यथानन्तरगाथाद्वयोक्त "नाणाहियस्स नाण पूइज्जई—" इत्यादि च घटते? इति ॥

अत्रैवार्थे जीवोपदिदिक्षुमाह—

ससारसमचाओ दुहाओ जइ जीव! तसि निव्विन्नो ।
मा नाणीणमवन्न करेसु ता दीवतुल्लाणं ॥ ९५ ॥

व्याख्या—ससारसम्भवाद् भवोद्भूतात् दुःखाद्भवात् यदि जीव ! त्वं भवानसि भवसि निर्विण्ण' श्रान्तः, मेति निषेधे ज्ञानिनामागमवतानामव ज्ञामवर्णवादादिरूपा कुरु विधेहि, तस्माद् भावप्रकाशकत्वेन दीपतुल्याना प्रदीपसदृशानाम् । अयमभिप्रायः—ज्ञानवतामवज्ञादिकरणात् ज्ञानावरणीय कर्म्म बध्यते, तथैव तथा दर्शनावरणीय, तेन च मोहनीय, मोहनीयेन चोदीर्णेनाष्टौ कर्माणि, ततश्च भवभ्रमणम् । एतच्च शतकभगवत्यादिषु सूत्रेषु प्रतीतमिति न वितन्यते । अतः सुष्टूक्त ज्ञानाद्यवज्ञातो भवदुःखमिति गाथार्थः ॥

ज्ञानाद्यवज्ञाविचारवर्ण षोडशोधिकार समाप्त ॥

इदानीं सप्तदश उच्यते—

गच्छं गुरुवयण वि य चइउं केइ चरति धम्मत्थी ।
तंपि न सगयमेय जम्हा सुत्ते इम भणियं ॥ १६ ॥

व्याख्या—गच्छमाचार्यादिसमुदाय गुरुवचश्च सूरिभणितं, चियशब्दः समुच्चयार्थः, त्यक्त्वा परिहृत्य केऽपि केचन चरन्ति पर्यटन्ति धर्म्मार्थिनश्चारित्र-प्रयोजनाः, तदपि गच्छत्यागादिक न केवल पूर्व्वोक्तमित्यपिशब्दार्थः, न नैव सङ्गत युक्तम्, एव गच्छत्यागादिना यस्मात्सूत्रे उपदेशपदाख्ये इद पुरोवर्ति भणितमुक्तमिति गाथार्थः ॥

सुद्धुछाईसु जत्तो गुरुकुलचागाइणेह विन्नेओ ।
सपरसरजक्खपिच्छत्थघायपायाछिवणतुल्लो (?) ॥ १७ ॥

व्याख्या—शुद्धोञ्छादिषु यत्न उद्यमः, तत्र शुद्धमाधाकर्म्माद्यदूषित, उञ्छ तु वस्त्रादि, आदिग्रहणाच्छेषानुष्ठानग्रह', गुरुकुलत्यागादिना गच्छतच्छि-क्षापरिहारेणेह प्रवचने विनेयो बोद्धव्यः। किंविशिष्टः ? सपरवेषेण (?) सरजस्का तापसविशेषास्तेषा पिच्छानि मयूराङ्गरुहाणि तदर्थं घातो विनाशस्तत्र पादाना चरणाना ' अछिवण'ति देशीभाषयाऽस्पर्शन तेन तुल्यः सदृश इति गाथार्थः॥ भावार्थस्तु कथानकादवसेयः। तच्चेद—

किलैकस्य नरपतेरश्वाः प्रदीपनके मनाक् दग्धाः, क्षतानि च तेषा जातानि। ततो नरपतिना वैद्यः पृष्टः, कथमेते भव्या' भविष्यन्ति ? तेनोक्त-यदि

'मायूरपिच्छनिर्म्मापितंतेलेन प्रक्ष्यन्ते ' इत्युक्ते नराधिपेन समादिष्टास्तदा नयनार्थं निजपुरुषाः, यावत्ते परिभ्रम्य समागता राज्ञः समीपे। कथितं च तैर्देव ! न कुत्रचिन्नीलकण्ठाङ्गरुहाणि सन्ति मुक्त्वा युष्माकं गुरून्। ते हि तानि सर्व्वाङ्गेषु धारयन्ति, न च जीवन्तो मुञ्चन्ति, इदमेव तेषां व्रतम्। राज्ञोक्त, यथेव ततो घातयित्वा तान् समानयत पिच्छान्, परं भवद्भिस्तेषां निजचरणा न लगनीया., यतोऽस्माकं ते गुरवः। तत्र जीवितव्यतुल्यान् मूलगुणान्ना श्रयति, पादस्पर्शनसदृशोत्तरगुणरक्षार्थं गच्छान्निर्गत्य ये पर्यटन्ति। तस्मादुत्तरगुणभङ्गेपि अशुद्धभक्ताभ्यवहारलक्षणे गच्छ एवासितव्यमिति ॥

इदानीं गुरुवचनाकरणे सिद्धान्तगाथामाह—

छट्ठट्ठमदसमदुवालसेहिं मासद्धमासखमणेहिं।
अकरिंतो गुरुवयणं अणंतससारिओ भणिओ ॥ ९८ ॥

स्पष्टार्थो। यदि पुनर्गच्छो गुरुश्च सर्वथा निजगुणविकलो भवति, तत आगमोक्तविधिना त्यजनीय, परं कालापेक्षया योऽन्यो विशिष्टतरस्तस्यो पसम्पद् ग्राह्या, न पुनः स्वतन्त्रेस्थातव्यमिति हृदयम् ॥

यत एवमतो जीवानुशिष्टिमाह—

हेलाए विहाडियदोसपंजरे गच्छवासगुरुवयणे।
जीव तुमं थिरचित्तं करेसु ता सिहरिसिहरं व ॥ ९९ ॥

व्याख्या—हेलया लीलया ' विहाडिय 'ति देशीभाषया विनाशिता दोषा रागादयस्त एव जीवशकुनिनिरोधकत्वात्पञ्जरं येन तस्मिन् गच्छवास गुरुवचने उक्तलक्षणे जीव आत्मन् त्वं भवान् स्थिरं निश्चलं, अनुस्वारोऽत्र प्राकृतत्वाल्लुप्तः, चित्तं मानसं कुरु विधेहि। तस्मात्किमिव ? शिखरिशिखरमिव पर्व्वतशृङ्गमिव, वा उपमार्थे, स च दर्शित एव। अत्राधिकारद्वयेप्येतत्परस्परोपकारकत्वेनैकगाथयैवोत्क्षेपो निगमनं च कृतमिति गाथार्थः ॥

गच्छगुरुवचनात्यागविचारार्थौ सप्तदशाष्टादशावधिकारौ समाप्तौ।

इत एकोनविंश उच्यते—

तह थंभसतिमाईण केई वारिंति पूयणाईयं ।
तन्न, जओ सिरिहरिभद्दसूरिणो णुमयमुत्त च ॥ १०० ॥

व्याख्या—तथेति वादान्तरभणनार्थः । ब्रह्मशान्त्यादीना मकारः पूर्व्ववत्, आदिशब्दादम्बिकादिग्रहः, केप्येके वारयन्ति पूजनादिकमादिग्रहणाच्छेपतदौचित्यादिग्रहः । तत्पूजादिनिषेधकरण नेति निषेधे । यतो यस्माच्छ्री हरिभद्रसूरेः सिद्धान्तादिग्रन्थकर्तुरनुमतमभीष्ट तत्पूजादिविधान, उक्त च भणित च पञ्चाशके इति गाथार्थः ॥

तदेवाह—

साहम्मिया य एए महड्ढिया सम्मदिट्ठिणो जेण ।
एसो चिय उचिय खलु एएसि इत्थ पूयाइ ॥ १०१ ॥

व्याख्या—प्रतीतार्था ॥

न केवल श्रावका एतेषामित्थ कुर्व्वन्ति, यतयोऽपि कायोत्सर्गादिकमेतेषा कुर्व्वन्तीत्याह—

विग्घविघायणहेउं जइणोवि कुणति हृदि उस्सग्गं ।
खित्ताइदेवयाए सुयकेवलिणा जओ भणियं ॥ १०२ ॥

व्याख्या—विघ्नविघातनहेतोरुपद्रवविनाशार्थं यतयोऽपि साधवोपि न केवल श्रावकादय इत्यपि शब्दार्थः, कुर्व्वन्ति विदधति, हृदीति कोमलामन्त्रणे, उत्सर्गं कायोत्सर्गं क्षेत्रादिदेवतायाः, आदिशब्दाद्भवनदेवतादिपरिग्रह, श्रुतकेवलिना चतुर्दशपूर्व्वधरेण यतो यस्माद्भणित गदितमिति गाथार्थः ॥

तदेवाह—

चाउम्मासियवरिसे उ उस्सग्गो खेत्तदेवयाए य ।
परिकयमेज्जसुराए करिंति चउमासिए वेगे ॥ १०३ ॥

ननु यदि चतुर्म्मासकादिभणितमिद किमिति साम्प्रत नित्य क्रियते ? इत्याह—

व्याचक्षमे किञ्चित् स्तोक, दीर्घता चात्र पूर्ववत्, तदपि च इतिबुद्धया एव मत्वा कथय ब्रूहि इति गाथार्थः ॥

तामेवाह—

अविकोविदेहि तरलियमइणो मा धम्मबाहिरा हुतु।
एए भव्वा, दसेमि तेण पडिवक्खवयणाइ ॥ ११८ ॥

व्याख्या-अविकोविदैरगीतार्थस्तरालितमतयो विसस्थुलबुद्धयो मेति प्रतिषेधे धर्म्मबाह्या दानाद्युत्तीर्णा भवन्तु एते मत्पक्षवर्तिनो भव्या मोक्षयोग्या', दर्शयामि प्रकटयामि तेन कारणेन प्रतिपक्षवचनानि उत्तरवचासि। ननु अन्यान् वारयसि, स्वय तु सवदनार्थं निजमणितस्य सर्व्वत्र तद्गाथाः कथयसि, विरुद्धमिदम्, सत्य, यदा विप्रतिपन्नो जनो दर्शने मति भवति, तदा रहस्यकथनेप्यदोषः। तथा च निशीथभणितमिद—

" तम्हा न कहेयव्व आयरिए एतु पवयणरहस्स।
खेत्त काल पुरिस नाऊण पगासए गुज्झ ॥ इति गाथार्थः ॥

व्यतिरेकमाह-

जइ पुण तुमपि एमेय कहसि सङ्गाण दुव्वियड्ढाणं।
ता तुज्झवि भवदडो निरत्थओ एरिसो होही ॥ ११९ ॥

व्याख्या—यदि पुनस्त्वमपि न केवल पूर्वोक्त इत्यपेरर्थ । ' एमेय'ति तरलितमत्यभावं कथयसि श्रावकाणा, किंविशिष्टाना ? दुर्व्विदग्धाना केवल पूर्व्वोक्तानामित्यपे रर्थ, भवदण्ड' ससारभय ईदृशो भविष्यतीति गाथार्थ' ॥

तह थंभसतिमाईण केई वारिति पूयणाईयं ।
तन्न, जओ सिरिहरिभद्दसूरिणो णुमयमुत्त च ॥ १०० ॥

व्याख्या—तथेति वादान्तरभणनार्थः । ब्रह्मशान्त्यादीनां मकारः पूर्व्ववत्, आदिशब्दादम्बिकादिग्रहः, केप्येके वारयन्ति पूजनादिकमादिग्रहणाच्चेपतदौचित्यादिग्रहः । तत्पूजादिनिषेधकरण नेति निषेधे । यतो यस्माच्छ्री हरिभद्रसूरेः सिद्धान्तादिवृत्तिकर्तुरनुमतमभीष्टं तत्पूजादिविधान, उक्त च भणितं च पञ्चाशके इति गाथार्थः ॥

तदेवाह—

साहम्मिया य एए महड्ढिया सम्मदिट्ठिणो जेण ।
एत्तो चिय उचियं खलु एएसिं इत्थ पूयाइ ॥ १०१ ॥

व्याख्या—प्रतीतार्थो ॥

न केवल श्रावका एतेपामित्थं कुर्व्वन्ति, यतयोऽपि कायोत्सर्गादिकमेतेपा कुर्व्वन्तीत्याह—

विग्घविघायणहेउं जइणोवि कुणंति हंदि उस्सग्ग ।
खित्ताइदेवयाए सुयकेवलिणा जओ भणियं ॥ १०२ ॥

व्याख्या—विघ्नविघातनहेतोरुपद्रवविनाशार्थं यतयोऽपि साधवोपि न केवल श्रावकादय इत्यपि शब्दार्थः, कुर्व्वन्ति विदधति, हंदीति कोमलामन्त्रणे, उत्सर्गं कायोत्सर्गं क्षेत्रादिदेवतायाः, आदिशब्दाद्भवनदेवतादिपरिग्रह , श्रुतकेवलिना चतुर्दशपूर्व्वधरेण यतो यस्माद्भणित गदितमिति गाथार्थः ॥

तदेवाह—

चाउम्मासियवरिसे उ उस्सग्गो खेत्तदेवयाए य ।
पक्खियसेज्जसुराए करिंति चउमासिए वेगे ॥ १०३ ॥

ननु यदि चतुर्म्मासकादिभणितमिदं किमिति साम्प्रतं नित्य क्रियते ? इत्याह—

'मायूरपिञ्छनिर्म्मापितनलेन प्रक्ष्यन्ते' इत्युक्ते नराधिपेन समादिष्टास्तदा नयनार्थं निजपुरपाः, यावत्ते परिभ्रम्य समागता राज्ञः समीपे। कथितं च तैर्देव! न कुत्रचिन्नीलकण्ठाङ्गरुहाणि सन्ति मुक्त्वा युष्माक गुरून्। ते हि तानि सर्व्वाङ्गेषु धारयन्ति, न च जीवन्तो मुञ्चन्ति, इदमेव तेषा व्रतम्। राज्ञोक्तं, यथेव ततो घातयित्वा तान् समानयत पिञ्छान्, पर भवद्भिस्तेषां निजचरणा न लगनीयाः, यतोऽस्माकं ते गुरवः। तत्र जीवितव्यतुल्यान् मूलगुणान्त्रा श्रयति, पादस्पर्शनसदृशोत्तरगुणरक्षार्थं गच्छान्निर्गत्य ये पर्यटन्ति। तस्मादुत्त रगुणभङ्गेऽपि अशुद्धभक्ताद्यव्यवहारलक्षणे गच्छ एवासितव्यमिति॥

इदानीं गुरुवचनाकरणे सिद्धान्तगाथामाह—

छट्ठट्ठमदसमदुवालसेहिं मासद्धमासखमणेहिं।
अकरिंतो गुरुवयणं अणतससारिओ भणिओ॥ ९८॥

उत्तानार्थो। यदि पुनर्गच्छो गुरुश्च सर्वथा निजगुणविकलो भवति, तत आगमोक्तविधिना त्यजनीयः, पर कालापेक्षया योऽन्यो विशिष्टतरस्तस्यो पसम्पद् ग्राह्या, न पुनः स्वतन्त्रेस्स्थातव्यमिति हृदयम्॥

यत एवमतो जीवानुशिष्टिमाह—

हेलाए विहाडियदोसपंजरे गच्छवासगुरुवयणे।
जीव तुमं थिरचित्तं करेसु ता सिहरिसिहरं व॥ ९९॥

व्याख्या—हेलया लीलया 'विहाडिय' ति देशीभाषया विनाशिता दोषा रागादयस्त एव जीवशकुनिनिरोधकत्वात्पञ्जरं येन तस्मिन् गच्छवास गुरुवचने उक्तलक्षणे जीव आत्मन् त्व भवान् स्थिरं निश्चलं, अनुस्वारोऽत्र प्राकृ तत्वाल्लुप्तः, चित्तं मानसं कुरु विधेहि। तस्मात्किमिव ? शिखरिशिखरमिव पर्व्वतशृङ्गमिव, वा उपमार्थः, स च दर्शित एव। अत्राधिकारद्वयेऽप्येतत्परस्परो पकारकत्वेनैकगाथयैवोत्क्षेपो निगमनं च कृतमिति गाथार्थः॥

गच्छगुरुवचनात्यागविचारार्थो सप्तदशाष्टादशावधिकारौ समाप्तौ।

इत एकोनविंश उच्यते—

तह यं भसतिमाईण केई वारिंति पूयणाईयं ।
तन्न, जओ सिरिहरिभद्दसूरिणो णुमयमुत्त च ॥ १०० ॥

व्याख्या—तथेति वादान्तरभणनार्थः । ब्रह्मशान्त्यादीनां मकारः पूर्व्ववत्, आदिशब्दादम्बिकादिग्रहः, केप्येके वारयन्ति पूजनादिकमादिग्रहणाच्छेपतदौचित्यादिग्रहः । तत्पूजादिनिषेधकरण नेति निषेधे । यतो यस्माच्छ्री हरिभद्रसूरेः सिद्धान्तादिवृत्तिकर्तुरनुमतमभीष्ट तत्पूजादिविधान, उक्त च भणित च पञ्चाशके इति गाथार्थः ॥

तदेवाह—

साहम्मिया य एए महड्ढिया सम्मदिट्ठिणो जेण ।
एत्तो च्चिय उचियं खलु एएसिं इत्थ पूयाइ ॥ १०१ ॥

व्याख्या—प्रतीतार्था ॥

न केवल श्रावका एतेषामित्थ कुर्व्वन्ति, यतयोऽपि कायोत्सर्गादिकमेतेषां कुर्व्वन्तीत्याह—

विग्घविघायणहेउं जइणोवि कुणति हंदि उस्सग्ग ।
खित्ताइदेवयाए सुयकेवलिणा जओ भणियं ॥ १०२ ॥

व्याख्या—विघ्नविघातनहेतोरुपद्रवविनाशार्थं यतयोऽपि साधवोपि न केवल श्रावकादय इत्यपि शब्दार्थः, कुर्व्वन्ति विदधति, हदीति कोमलामन्त्रणे, उत्सर्गं कायोत्सर्गं क्षेत्रादिदेवतायाः, आदिशब्दाद्भवनदेवतादिपरिग्रह, श्रुतकेवलिना चतुर्द्दशपूर्व्वधरेण यतो यस्माद्भणित गदितमिति गाथार्थः ॥

तदेवाह—

चाउम्मासियवरिसे उ उस्सग्गो खेत्तदेवयाए य ।
परिकयभेजसुराए करिंति चउमासिए वेगे ॥ १०३ ॥

ननु यदि चतुर्म्मासकादिभणितमिद किमिति साम्प्रतं नित्यं क्रियते ? इत्याह—

संपइ निच कीरइ संनिज्झाभावओ विसिट्ठाओ ।
वेयावच्चगराण इच्चाइ वि बहुयकालाओ ॥ १०४ ॥

व्याख्या—साम्प्रतमधुना नित्य प्रतिदिवस क्रियते विधीयते, कस्मात्? सान्निध्याभावत तस्य करणाद्, विशिष्टादतिशायिनो वैयावृत्त्यकराणां प्रतीतानामित्याद्यपि न केवल कायोत्सर्गादीत्यपेरर्थ', आदिग्रहणात् ' सतिकराणा मि'त्यादि दृश्य, प्रभूतकालाद् बहोरनेहस इति गाथार्थः ॥

इत्थ स्थिते किं कर्त्तव्यम्? इत्याह—

विग्घविघायणहेउं चेइहररक्खणा य निचंपि ।
कुज्जा पूयाईयं ण्याण धम्मव किंच ॥ १०५ ॥

व्याख्या—विघ्नविघातनहेतोरुपसर्गनिवारकत्वेन आत्मन इति शेषः, चैत्यगृहरक्षाच देवभवनपालान्नित्यमपि सर्व्वदा न केवलमेकदेत्यपिशब्दार्थः, कुर्याद्विदध्यात् पूजादिकमादिशब्दात्कायोत्सर्गादिकार, एतेषा ब्रह्मशान्त्यादीनां धर्म्मवान् धार्मिक । अयमभिप्रायः—यदि मोक्षार्थमेतेषा पूजादि क्रियते ततो दुष्ट, विघ्नादिवारणार्थं त्वदुष्ट तदिति, किञ्चेत्यभ्युच्चये इति गाथार्थः ॥

अभ्युच्चयमेवाह—

मिच्छत्तगुणजुयाण निवाइयाण करिंति पूयाई ।
इहलोयकए सम्मत्तगुणजुयाण न ऊण मूढा ॥ १०६ ॥

व्याख्या—मिथ्यात्वगुणयुताना प्रथमगुणस्थानवर्त्तिना नृपादीना नरेश्वरादीना कुर्व्वन्ति पूजादि अभ्यर्चन नमस्कारादि इहलोककृते मनुष्यजन्मोपकारार्थं, सम्यक्त्वयुताना दर्शनसहिताना ब्रह्मशान्त्यादीनामिति शेष', न पुनर्न मूढा अज्ञानिन इति गाथार्थ ॥

इत्थ स्थिते जीवोपदेशमाह—

ता मा तुम निवारसु तम्हा ण्याण पूयणाईयं ।
जइ निव्विग्घं धम्मं इच्छसि काउं सया जीव ॥ १०७ ॥

व्याख्या—मेति निषेधे त्वं भवान्निवारय तस्मादेतेषां ब्रह्मशान्त्या-दीनां पूजादिकं-अर्चनमस्कारादिकं, यदीति विकल्पार्थः, निर्विघ्नमुपद्रवरहितं धर्मं दानादिकं, इच्छस्यभिलषसि कर्तुं विधातुं सदा नित्यं जीव ! आत्मन्निति गाथार्थः ॥

ब्रह्मशान्त्यादिपूजनविचारार्थोऽयमेकोनविंशोऽधिकारः ॥

अधुना विंशतितममाह

अन्ने उ गुरुयसिरिमोहरायआणापरव्वसा बाला ।
पाढिंति सावयजणे उस्सग्गववायगाहाउ ॥ १०८ ॥

व्याख्या—अन्ये पुनरपरे गुरुकश्रीमोहराजाज्ञापरवशा महाज्ञाननृपति-शासनायत्ताः, अत एव बाला हिताहितविवेकविकला पाठयन्ति सूत्रदानतः श्रावकजनान् श्राद्धलोकान् उत्सर्गापवादगाथाः समयप्रसिद्धा इति गाथार्थः ॥

तत्किं सम्मतं न वा ? इत्याह—

तं तु न कहवि हरिसं जणेइ सुबहुस्सुयाण सूरीण ।
जम्हा निसीहगंथे सावयमुद्दिस्स भणियमिणं ॥ १०९ ॥

व्याख्या—तत्पुनर्न कथमपि न केनापि प्रकारेण हर्षं सन्तोषं जनयत्युत्पा-दयति सुबहुश्रुतानामतिशयागमज्ञानां, इतरेषां तु जनयेदपि, सूरीणामाचार्याणां, यस्मान्निशीथग्रन्थे प्रतीते श्रावकं श्राद्धमुद्दिश्याश्रित्य भणितमुक्तमिदं वक्ष्यमाण-मिति गाथार्थः ॥

तदेवार्थतो गाथाद्वयेनाह—

इयरसुयंपि पाढतयाण साहूण संजईणं । ·
पच्छित्तं खलु एयं सिद्धंताउ पुणो नाणं ॥ ११० ॥
छज्जीवणिसुत्तेणं अत्थउ पिंडेसणा चेव ।
कप्पइ पढिउं सोउंच आगमाउ न उण अन्नं ॥ १११ ॥

व्याख्या—इतरसूत्रमपि प्रकरणादिकं न केवलं सिद्धान्तसूत्रमित्यपि शब्दार्थः, पाठयतां सूत्रदानतः श्रावकादिकमित्यध्याहारः, साधूनां यतीनां

चार्थिकाणा, चः समुच्चये, प्रायश्चित्तमेव समये प्रतीतमुत्सर्गतः, खलुरवधारणे एतत् वक्ष्यमाण सिद्धान्तादागमात्पुनस्तेषां श्रावकाणा षड्जीवनिका सप्रप प्रसिद्धा सूत्रेण पाठनलक्षणेन सूत्रानुज्ञायामर्थोऽपि एतस्यानुज्ञातो द्रष्टव्यः, अर्थतः अभिधेयमाश्रित्य पिण्डेषणैव प्रतीता कल्पते युज्यते अपवाद इति शेषः; पठितु सूत्रत श्रोतु चार्थत' आगमान् सिद्धान्तान्, न पुनर्नत्रान्यदपरम् । तथा च निशीथगाथार्द्धम् " पव्वज्जाए अभिमुह वा एति गिहिअन्नपासडी ।" एत च्चूर्णि —गिहिं अन्नपासंडिं वा पव्वज्जाभिमुह सावग वा ' छज्जीवणिय ' त्ति जाव सुत्तउ अत्थउ जाव पिंडेसणाए, एसगिहत्थाइसु अववाउत्ति " इति गाथाद्वयार्थः ॥

सूत्रेण विहितसवधा गाथामाह—

किंच जईणवि परिणामिआण विज्जति छेयसुत्तत्था ।
अइपरिणयाण परिणामियाण न उणामदिट्ठता ॥ ११२ ॥

व्याख्या—किञ्चेत्यभ्युच्चये । श्रावकाणा तावत् छेदग्रन्थादीना सर्वथा निषेध' सिद्ध एव, यतीनामपि व्रतिना परिणामकाणा-उत्सर्गापवादप्रियाणां दीयन्ते छेदग्रन्थसूत्रार्था'—प्रतीता , अतिपरिणामकानामपवादरसिकाना, अप रिणामकानामुत्सर्गतन्निष्ठाना नैव, नच पुन शब्दोऽवधारणार्थो दर्शित एव, आम्रदृष्टान्तान्चृतज्ञातात् । तथेद—" किल केनचिदाचार्येण सिद्धान्तरहस्य दातु कामेन निजक्षुल्लकपरीक्षार्थं क्षुल्लकत्रय क्रमेणाहूयेदमुक्त-भो ! अस्मदर्थं आम्र फलान्यानयत । ततस्तैरिद 'क्रमेण चिन्तित श्यामसहृष्टसहजवदन स्मलैरकृत्यमिदं, भव्यमिद, तृतीयेन किं खण्डैर्वागोलैर्वा पंकरपक्वै. वे' प्रयोजनम् ? इति न सम्यग् ज्ञायते, ततो गुरुमभिरन्त्र पृष्टवान्-भगवन् ! अवगतो युष्माकमादेश., पर विशेषतो ज्ञातुमिच्छामि, तत कथयन्तु पूज्या , येन तान्यानयामि शीघ्रमिति। अत्र प्रथम उत्सर्गप्रियत्वादपरिणामको द्वितीयस्त्वपवादरुचित्वादतिपरिणा- मक , तृतीयस्तूभयप्रियत्वात्परिणामक' । आद्यावयोग्यौ, तृतीयस्तु योग्य इति गाथार्थ ॥

अत्रार्थ दोषमाविष्कुर्वन्निदमाह—

अविहिय उवहाणाण नाणइयारेण तह असज्झाए ।
मज्झाय कुणनाण ववहारे भणियमेवत्ति ॥ ११३ ॥

व्याख्या—अविहितोपधानानामकृततपसा, ज्ञानातिचारेण श्रुतमालिन्यजनकेन, तथाऽपरं अस्वाध्याये कालवेलादौ स्वाध्यायपाठं कुर्वता, विदधता व्यवहारे छेदग्रन्थाख्ये भणितमुक्तमेवमित्थम्, इतिवाक्यमभाप्तौ इति गाथार्थः ॥

तदेवाह—

उम्माय व लभेज्जा रोगायकं व पाउणे दीहं ।
केवलिपन्नत्ताउ धम्माउ वावि भंसेज्जा ॥ ११४ ॥

प्रकटार्था ।

अत्रैवार्थे दोषं दर्शयन् दृष्टान्तदार्ष्टान्तिकगर्भं गाथाद्वयमाह—

जह रन्ना पडिसिद्धे दितो गिण्हंत उ य रयणे उ ।
पावइ दंडमिहोग्गं तह जिणरन्नाउ नाणुमए ॥ ११५ ॥
छेयसुयत्थे रयणोवमे उ वामोहा पढंति पाढिंति ।
पावंति महाघोरं भवदंडं लंघियजिणाणा ॥ ११६ ॥

व्याख्या—यथेति दृष्टान्तार्थे । राज्ञा भूपतिना प्रतिषिद्धे निवारिते 'नैतानि कस्यचिद्दातव्यानि' इति ददत् प्रयच्छन् भाण्डागारिकादिः, गृह्णंश्चादानः पदात्यादी रत्नानि माणिक्यानि, तु पूरणे, प्राप्नोति लभते दण्डं विनापहारादिकम्, इह जगत्युग्रं कशघातनादि, तथेति दार्ष्टान्तिकयोजनार्थे, जिनराज्ञा सर्वज्ञनरेश्वरेण, तुस्तथैव, न नैवानुमतानननुज्ञातान् छेदसूत्रार्थान् रत्नोपमान् माणिक्यसदृशान् व्यामोहादज्ञानात् पठन्त श्रावकादयः, पाठयन्तश्च तानेव यत्यादयः, विभक्तिव्यत्ययात् प्राप्नुवन्ति लभन्ते महाघोर–अतीवरौद्र भवदण्डं संसारभ्रमणं, किंविशिष्टाः ? लङ्घितजिनाज्ञा त्यक्तसर्वज्ञशासना इति गाथाद्वयार्थः ॥

यत एवमतो जीवशिक्षामाह—

तम्हा मा जीव तुमं सड्ढाणं देसु छेयसुत्तत्थे ।
जंपि य कहेसि किंची तं पि य इयबुद्धिए कहसु ॥ ११७ ॥

व्याख्या—तस्मान्मेति निषेधे, जीव आत्मन् ! देहि प्रयच्छ छेदसूत्रार्थान्, उपलक्षणत्वादस्यान्यदपि सिद्धान्तनिषिद्धं द्रष्टव्यम् । यदपि च कथयसि

व्याचक्षसे किञ्चित् स्तोक, दीर्घता चात्र पूर्ववत्, तदपि च इतिबुद्ध्या एवं मत्वा कथय ब्रूहि इति गाथार्थ: ॥

तामेवाह—

अविकोविदेर्हिं तरलियमइणो मा धम्मबाहिरा हुंतु।
एए भव्वा, दसेमि तेण पडिवक्खवयणाइ ॥ ११८ ॥

व्याख्या-अविकोविदैरगीतार्थस्तरलितमनयो विसस्थुलबुद्धयो मेति प्रतिषेधे धर्म्मबाह्या दानाद्युचीर्णा भवन्तु एते प्रत्यक्षवार्त्तिनो भव्या मोक्षयोग्या, दर्शयामि प्रकटयामि तेन कारणेन प्रतिपक्षवचनानि उत्तरवचांसि । ननु अन्यान् वारयसि, स्वय तु सवदनार्थं निजभणितस्य सर्व्वत्र तद्गाथाः कथ यसि, विरुद्धमिदम्, सत्य, यदा विप्रतिपन्नो जनो दर्शन प्रति भवति, तदा रहस्यकथनेऽप्यदोषः । तथा च निशीथभणितमिद—

" तम्हा न कहेयव्व आयरिए एतु पवयणरहस्स ।
खेत्त काल पुरिस नाऊण पगासए गुज्झं ॥ इति गाथार्थ. ॥

व्यतिरेकमाह-

जइ पुण तुमपि एमेय कहसि सड्ढाण दुव्वियड्ढाण ।
ता तुज्झवि भवदडो निरत्थओ एरिसो होही ॥ ११९ ॥

व्याख्या—यदि पुनस्त्वमपि न केवल पूर्वोक्त इत्यपेरर्थ: । ' एमेय'ति तरलितमत्यभावे कथयसि जल्पसि श्राद्धानां श्रावकाणा, किंविशिष्टाना ? दुर्व्विदग्धानां ज्ञानलवगर्व्वोद्धुराणा तस्मात्त्वापि न केवल पूर्व्वोक्तानामित्यपे रर्थ, भवदण्ड ससारभय निरर्थको निष्प्रयोजन ईदृग् ईदृशो भविष्यतीति गाथार्थ. ॥

श्रावकसिद्धान्तगाथापाठनविचारणो विंशतितमोऽधिकार

एवं विंशतितममाह—

अन्ने उ अहम्माणो नियमाभिप्पायवज्जयविहारी ।
नियसिस्सगणचडिया अडंति बहुगामनगरेसु ॥ १२० ॥

व्याख्या—अन्ये पुनरपरे अहमानिनोऽहंकारिणो निजकाभिप्रायोद्युक्तविहारिणो स्वमतसुविहिता निजशिष्यस्कन्धचटिताः स्वसाध्वसारूढा, अटन्ति चरन्ति ग्रामनगरेषु प्रभूतनिवासेषु मासकल्पविहारिणो वयमिति शेषः । इति गाथार्थः ॥

अत्रापि जीवोपदेशगर्भं विरोधं दर्शयन् गाथाद्वयमाह—

तत्थवि तुमं विभावसु अहहो अन्नाणविलसियं एय ।
जं जंघाबलहीणाइविहरण वारियं बहुहा ॥ १२१ ॥

ववहार-पचकप्पाइएसु गंथेसु सुत्तकेवलिणा ।
अइवित्थरेण भणिय पज्जन्ते तत्थिमा गाहा ॥ १२२ ॥

व्याख्या—तत्रापि-स्कन्धचटितविहरणेऽपि त्वं जीव! विभावय चिन्तय अहहो इत्याश्चर्ये । अज्ञानविलसितं मूढताविजृम्भितमेतद् एव विहरणम् । यस्माज्जंघाबलहीनादिविहरणम्, आदिशब्दाद् ग्लानादिपरिग्रहः, वारितं निषिद्धं बहुधाऽनेकप्रकारं व्यवहारपञ्चकल्पादिषु प्रतीतेषु ग्रन्थेषु शास्त्रेषु श्रुतकेवलिना भद्रबाहुस्वामिना । कथम्? इत्याह—अतिविस्तरेण महाप्रपञ्चेन भणितमुक्तं पर्यन्ते, तदधिकारव्युच्छित्तौ तत्र तेषु ग्रन्थेषु इयमग्रे भणिष्यमाणा गाथा छन्दोविशेषलक्षण् इति गाथार्थः ॥

तामेवाह—

जो गाउय समत्थो सराढाराब्भ भिक्खवेलाउ ।
विहरउ एसो सपरक्कमाउ नो विहरितेण ॥ १२३ ॥

पर सुबोधा, नवरं प्रहरद्वयेन गव्यूतमेकं यावद् गन्तुं चरणाभ्या( शक्नोति ) तावद् विहरतु, तदभावे स्थानस्थितेनैवासितव्यमिति तात्पर्यार्थः ॥

एवमवगते जीवोपदेशमाह—

ता जइ तुहत्थि सत्ती विज्जन्ते सोहणा जइ सहाया ॥
जीव तुम तो विहरसु अह नो तो सस विहरते ॥ १२४ ॥

व्याख्या—ततो यदि भवतोऽस्ति विहर्तुं शक्तिः सामर्थ्यं, विद्यन्ते

सन्ति शोभना भव्या यदि सहाया गीतार्थादिसाधव , जीव ! आत्मन् ! ततो विहर पर्यट । अथेति विस्तरार्थ । नो नैव तत. क्षम श्लाघ्य विहरत आगमो क्तविधिना चरत इति गाथार्थः ॥

स्फन्धचटिनविहारवर्णन(स्वरूप)एकविंशतितमोऽधिकार ॥

द्वाविंशमाह—

मोत्तूण पढणत्थं सिस्से विहरंति मासकप्पेणं ।
केइ पसिद्धत्थी उज्जय म्हि लोए पयासित्ता ॥ १२४ ॥

व्याख्या—मुक्त्वा त्यक्त्वा पठनार्थमागमादिग्रहणार्थं शिष्यान् अन्तेवासिनो विहरन्ति पर्यटन्ति मासकल्पेन मतीतेन केऽपि न सर्वे मसिद्धयर्थिन. ख्यातिकामा उद्यता सुविहिता ' अम्हे 'त्ति वय लोक जगति मकाशयन्त. मकटयन्त' इति गाथार्थः ॥

इदमपि निषेधयन्निदमाह—

नेयंपि आगमन्नूणं माणसे जणइ सोहणुक्करिसं ।
जम्हा समए भणिओ विहारकरणमि एस विही ॥१२६॥

व्याख्या—नेति निषेधे । इदमपीत्थ विहरण न केवल पूर्वोक्तमित्य पिशब्दार्थ आगमज्ञाना सिद्धान्तविदां मानसे चित्ते जनयत्युत्पादयति शोभन लष्टमुत्कर्षं ममोदम्, यस्मात्समये आगमे भणित उक्तो विहारकरणे चङ्कमण विधौ एष वक्ष्यमाणो विधि. कर्तव्यमकार इति गाथार्थ ॥

तामेवार्थतोऽर्द्धतृतीयगाथाभिरेवाह—

सुत्तत्थेहिं निप्फाइऊण सिस्से उ एगठाणाठिओ ।
मोत्तुं मासविहार काऊण पोरिसिंदुग तु ॥ १२७ ॥

गामगामेण तओ विहरिज्जा सुविहिओ निरासंसो ।
नियगगुरुगरणेण सद्धेण गिहिहरण तहा ॥ १२८ ॥

तिविहेण लाघवेण उवहिसरीरिंदियाभिहाणेण ।

व्याख्या—सूत्रार्थाभ्यां प्रतीताभ्यां निष्पाद्य निष्ठितान् कृत्वा शिष्यान् क्षुल्लकान् एकस्थानस्थितो ग्रामाद्याश्रितो मुक्त्वा परिहृत्य मासविहारमेकत्र त्रिंश दिनावस्थितिरूपं, यतो व्यवहारे पठनविधावुक्तम्—

" बारसवासे गहिए उक्कालिय सरइ वरिसमेगं तु ।
सोलस उ दिट्ठिं वा गहण सरण दस दुवेया ॥

'सरइ' त्ति परावर्तते स्थिरीकरणार्थम् । तथा तत्रैव " से जे गिण्हिउ धारइउ य जोगा थेराण ते दिंति, सहायए उ गिण्हति, ते ठाणठिया सुहेण किच्चं य थेराण करिंति सव्व " इत्यादि ॥ तथा कृत्वा पौरुषीद्विकं समयप्रसिद्धम्, अयमाशय'—यस्मिन् दिने ग्रामे गम्यते तस्मिन्नपि उत्सर्गतः सूत्रपौरुषीमर्थपौरुषीं कृत्वा गन्तव्यम्, न केवलमवस्थितैरन्यथात्वरितैः, तुः पूरणे ग्रामानुग्रामेण कोऽर्थः ? नैकमपि ग्राममपान्तराले मुक्त्वा गन्तव्यम्, ततो विहरेत् यायात् सुविहितो यतिर्निराशंस आहाराद्यभिलाषरहितो निजकेन स्वीयेनोपकरणेन वस्त्रादिना सर्वेण समस्तेन गृहीतेनात्तेन, तथा समुच्चयार्थः, त्रिविधेन त्रिप्रकारेण लाघवेन गुरुत्वप्रतिपक्षिणोपधिशरीरेन्द्रियाभिधानेन, तत्रोपधिलाघवमपवर्गलोपकरणं न ग्राह्यम् । शरीरलाघवं तु दुग्धद्रव्यादिभिः शरीरं नातीव पीननीयम् । इन्द्रियलाघवं तु रागद्वेषाकरणतः शब्दादौ विहर्तव्यम् । इति सार्धगाथाद्वयार्थः ॥

व्यतिरेके सार्धगाथाद्वयेन दोषानाह—

एयन्नहा उ करणे आणाभंगा य होंति ॥ १२९ ॥

पोरिसीदुयस्स भंगो बीयं ओसन्नपासपढणं तु ।
तइयं मिच्छावाओ तुरियमगीयाण सिस्साणं ॥ १३० ॥

सुबहूणंपि एगागित्तणं तु तंमि य हवंति जे दोसा ।
ते सव्वे चिय सूरिस्स होंति अनिवारियप्पसरा ॥ १३१ ॥

व्याख्या—पौरुषीद्वयस्योक्तलक्षणस्य भङ्गोऽभावः एक आज्ञाभङ्गः, उत्तरत्र द्वितीयभणनाल्लभ्यते । द्वितीयमाज्ञाभङ्गकरणमवसन्नपार्श्वपठनं शिथिलसमीपसिद्धान्तादिश्रवणम् । तु पूरणे । तृतीयं मिथ्यावादः—असत्यभणनम्, अमासकल्पे मासकल्पवादात् । तुरीयं चतुर्थमगीतानां सूत्रार्थानभिज्ञानानां शि-

ध्याणां विनेयानां बहूनामपि प्रभूतानां न केवलमेकस्य इत्यपिशब्दार्थे । एकाकित्वमेवासहायता । तुरेवकारार्थः । तस्मिन् पुनरेकाकित्वे भवन्ति जायन्ते ये निर्दिष्टस्वरूपा दोषा' दूषणानि ते दोषाः सर्वे एव समस्ताः सूरेराचार्यस्य भवन्ति अनिवारितप्रसरा अनिषिद्धोदया । ते च " एगस्य कउ धम्मो "-इत्यादिगाथातोऽवगेयाः । इति सार्द्धगाथाद्वयार्थः ॥

सूत्रेण कृतसवन्धा गाथामाह—

किंच-तुच्छे गासच्छायणकज्जे जपति सावयजणस्स ।
सुबहुंपि न उण सिस्साण वालिसा पोरिसिदुग तु ॥१३२॥

व्याख्या—किंचेत्यभ्युच्चयार्थः तुच्छे अल्पे एकभवोपकारकारित्वात्, ग्रासाच्छादनकार्ये आहारवस्त्रनिमित्त कथयन्ति श्रावकजनस्य श्राद्धलोकस्य सुबहपि प्रचुरतर न पुनरव शिष्याणा निजविनेयाना वालिशा अज्ञा पौरुषी-द्वय प्रसिद्ध तु, पूरणे इति गाथार्थ ॥

ननु ते यथैव भणिष्यन्ति न वय शास्त्राण्यवगच्छामः ततोऽवसन्नसमीपे विनेयान् पाठयाम', किमप्रासङ्गतमित्याह—

ससमयभि परसमयंमि सयपि जइ नो हवन्ति गहियत्था।
ता अच्छतु चिरंपि हु असढा जा हुंति पसट्ठा ॥ १३३ ॥

व्याख्या—स्वसमयपरसमये आत्मीयेतरराद्धान्ते स्वयमप्यात्मना न केवल शिष्या इत्यपिशब्दार्थ । यदि नो नैव भवन्ति जायन्ते गृहीतार्था अवगताभिधेयास्ततः तिष्ठन्तु, आसता चिरमपि मासाधिक, पूर्वोक्तम्, हु पूरणे । अशठा अमायिन , अन्यथा चोक्त पञ्चकल्पे—

" उग्गमगाइन्नोसा असेवमाणो विसोज्झावन्तो ।
जम्हा दोसाययणउरमि ठावेतु सो वसई ॥

पन्नरसुग्गमदोसा दस एसणदोस एए पणुवीस ।
सजोयणा य पच य एए तीस तु अवराहा ॥

एएहिँ दोसेहिँ जइ असपत्ति लग्गइ कहवि ।
दिवसे दिवसे सो खलु कालाइए वसतो उ ॥ ३ ॥

तथा चूर्ण्यां—" जो पुण निकारणे अन्उइ अइरेगं उरेण वा निग्गच्छइ सो पासत्थाइठाणेसु वट्टइ, त च पासत्था ठाणमकिलिट्ठं जिणवुत्त थेरेहिय" इत्यादि। जा (यावद्) हवति जायन्ते पच्छचि प्राप्तार्था गीतार्था इति यावद् इति गाथार्थः ॥

ननु किमेव विहारकरणे कोऽपि गुणो न विद्यते ? इत्याह—

इय करणेवि हु कोइ गुणो भवे जइ न ते उ इ य यिंति ।
अन्ने नीयाइगुणा वय पुणो मासकप्पवत्था ॥ १३४ ॥

व्याख्या—इतोरथकरणेऽपि विधानेऽपि न केवल सिद्धान्तोक्तकरणे इत्यपेरर्थः। हुः पूरणे। कोऽपि स्तोको गुणो विशुद्धिकारको भवेज्जायेत यदि न नैव पूर्वोक्तविहारिण इत्येव ब्रुवन्ति प्रतिपादयन्ति । किम् ? इत्याह—अन्ये अस्माद्व्यतिरिक्ता नीत्यादिगुणाः स्थूरत्वाद् नित्यवासपार्श्वस्थादिगुणाः 'वय पुन मासकल्पस्था उद्युक्तविहारिण इति गाथार्थः ॥

ननु यदि त एव कथयन्ति, ततः कथयन्तु। कोऽत्र दोषः ? इत्याह—

जं सपन्नगुणोवि हु संपुन्नगुणेसु कुणइ अप्पाण ।
तस्स हु समत्त पि हु निस्सार होइ किं बहुणा ॥ १३५ ॥

व्याख्या—यस्मादसपूर्णगुणोऽपि अपरिपूर्णगुणोऽपि न केवल सगुण इत्यपिशब्दार्थः। हुस्तथैव। सपूर्णगुणेषु सुमाधुषु करोति विदधाति आत्मान स्व तस्यासपूर्णगुणस्य सपूर्णगुणात्मख्यापकस्य सम्यक्त्वमपि दर्शनमपि न केवल ज्ञानचारित्रे। हुकारो पूर्ववत् । निस्सार तुच्छ भवति जायते, किं बहुना जल्पितेनेति शेषो दृश्यः। अस्पार्थ सवादो 'गुणहीणो गुणरयणायरेसु' इत्यादिगाथातोऽवसेयः। इदमत्र हृदयम्—यावदनुष्ठान क्रियते तावत्क्रियते, शेषस्य श्रद्धान शुद्धप्ररूपण च विधीयते, अन्यथा महाननर्थः। यत उक्त व्यवहारे—

" उम्मग्गदेसणाए सतस्स छायणाए मग्गस्स ।
बंधइ कम्मरयमलं जरमरणमणंतयं घोरं ॥–"

इति मत्वा ' मासकल्पानुष्ठानाकरणे मासकल्पविहारिणो वयम् ' इति न युज्यते संसारभीरुणा वक्तुम् । इति गाथाभावार्थः ॥

ननु यदि विहारः कर्तुं न शक्यते तत इत्थं वसतिसंक्रमोऽस्तु इत्याह–

मुद्धजणविप्पयारणमेत्तं वसहीए संकमोवि इमो ।
जइ नो अडंति तेसुं गिहेसु तो होज्ज सफलो सो ॥१३६॥

व्याख्या मुग्धजनविप्रतारणमात्रं प्राकृतलोकहृत्यावर्जनार्थं वसतेरगारस्य सङ्क्रमोऽप्यन्यान्यवसतिगमनव(छ)ल तत्कृतं विहरणमित्यपिशब्दार्थः, अयं मुग्धजनप्रतीतः । ननु किं सर्वथापि साधूनां वसतिसंक्रमः सफलो न भवति ? इत्याह–यदि नो नैव अटन्ति गच्छन्ति तेषु गृहेषु येषु प्रथममासकल्पे आहारादि गृहीतं ततो भवेद् जायेत सफलः श्रेयान् स मासंसक्रमः । विहारो हि गृहस्थप्रतिबन्धनाहाराशुद्धिर्माभूदिति विधीयते, इत्थमकरणे तदवस्थित एव स दोषः । इति गाथार्थः ॥

अत्रैवार्थेऽभ्युच्चयमाह—

खेत्ताभावे रोहाइएसु तह वुड्ढवासकाले य ।
संकमकरणं भणियं जहा तहा नेय तं जुत्तं ॥ १३७ ॥

व्याख्या—' खेत्ताभावे 'त्ति । क्षेत्राभावे मासकल्पादियोग्यग्रामाद्यभावे रोधादिकेषु, तत्र रोधः परचक्रेण नगरवेष्टनम्, आदिशब्दान्मार्गादौ अस्वास्थ्याग्रह, । तथा वृद्धवासकाले च वक्ष्यमाणे च संक्रमकरणमन्यान्यवसतिगमनलक्षणं भणितमुक्तं व्यवहारादिषु । तत्र हि क्षेत्राद्यभावे एकत्र निवासे नववसतयो न चाहारादि, गृहषट्कत्रयं च ऋतुबद्धवर्षाकालादि भणिता, तदभावे एकैकहानिक्रमेणोभाभ्यां भणितं । स च विशेषतो व्यवहारादवसेयः । यथा तथा स्वाभिप्रायेण नैव नच तत्संक्रमकरणं युक्तं सगतम् इति गाथार्थः ॥

एवमवगते जीवोपदेशमाह—

निद्धारिऊण मा किंपि कहसु सड्ढाण दुव्वियड्ढाण ।
कज्जाकज्जविभागो दुन्नेओ मंदबुद्धीहिं ॥ १३८ ॥

व्याख्या—निर्द्धार्य पृथक्कृत्य, मा निषेधे, किमपि स्तोकमपि कथय जल्प श्राद्धानां श्रावकानां दुर्विदग्धानां पल्लवग्राहिणां कार्याकार्यविभागो विधेयाविधेयविच्छित्तिर्दुर्ज्ञेयो दुरवगमो मन्दबुद्धिभिः स्वल्पमतिभिः । इति गाथार्थः ॥

पूर्वोक्तस्यार्थस्य संवादार्थं व्यवहारगाथाः प्रतिपादयन् तत्संबन्धार्थं गाथामाह—

सामन्नेणं भणियंपि जइ न रोयंति दुव्वियड्ढाओ ।
तो पयड चिय साहसु इमाहि ववहारगाहाहिं ॥ १३९ ॥

प्रकटार्थो ।

ताश्च इमाः—

वुड्ढस्स उ जो वासो वुड्ढिं व गओ उ कारणेणं ति ।
एसो उ वुड्ढवासो तस्स उ कालो इमो होइ ॥ १३८ ॥

अंतो मुहुत्तमित्त जहन्नमुक्कोसपुव्वकोडीओ ।
मुत्तु गिहिपरियायं जं जस्स व आउयं तित्थे ॥ १४० ॥

जंघाबले व खीणे गेलन्नसहायया व दुब्बले ।
पडिवज्जउत्तिमट्ठे निप्फत्ति चेव तरुणाणं ॥ १४१ ॥

व्याख्या—वृद्धस्य स्थविरस्य तुः पूरणे यो वासो निवसनं वृद्धिं वा दीर्घकालावस्थितिलक्षणां गतः प्राप्तः तुः पूर्ववत् कारणेन वक्ष्यमाणेन एष निर्दिष्टस्वरूपो वृद्धवासः, तस्य पुनः वृद्धावासस्य कालोऽयं वक्ष्यमाणो भवति जायते । अन्तर्मुहूर्तकालः प्रतीतः, जघन्यः सर्वस्तोकः । उत्कृष्टस्तु प्रभूतः पूर्वकोटीः तुस्तथैव । प्रकारान्तरेण उत्कृष्टस्वरूपमाह—मुक्त्वा परिहृत्य गृहपर्यायमगार-

वासलक्षण यदनिर्द्धारितसरूप यस्य स तीर्थकृत आयुष्क जीवितं तीर्थ प्रतीते तद्वृद्धवासमानयुक्तत्वम् । कारणवृद्धावासमाह—जङ्घाबले जानुमात्रे, वाशब्द समुच्चये, स च प्रत्येक सर्वद्वारेषु द्रष्टव्यः, क्षीणे भ्रष्ट तरुणवयसोऽपि वृद्धावास जानीयाद् एव सर्वत्र योज्यम् । ग्लानत्वे रोगप्रादुर्भावे असहायतायां वा साध्वभावे, दौर्बल्ये दुष्कालादौ आहाराद्यप्राप्त्या बलाभावे, उत्तमार्थे अनशने प्रतिपन्नः स्थितो निष्पत्ति सूत्रार्थाभिज्ञतां चैव शब्दः समुच्चयार्थः तरुणानां स्वशिष्याणां करोति । इति गाथात्रयार्थ ॥

प्रस्तुतोपयोगिद्वारव्याख्यानार्थं गाथार्द्धमाह—

निप्फत्ती तरुणाण अंतिमदारस्स विवरण तत्थ ।

व्याख्या—निष्पत्ति गीतार्थानां तरुणानां शिष्याणामिति अन्तिम द्वारस्य विवरण व्याख्यान तत्र व्यवहारे ॥ इति गाथार्थः ॥

तदक्षरैरेवोत्तरार्धमाह—

आयपरे निप्फत्ती कुणमाणे यावि अच्छेज्जा ॥

व्याख्या—आत्मनः स्वस्य परस्य वा शिष्यादेर्निष्पत्तिं कोविदतां कुर्वाणश्चापि निदधानः 'अच्छेज्ज' ति तिष्ठेत् पूर्वोक्तकालमान 'बारस वासे' त्यादिक वसेद् । अत्र च यत्पूर्वार्द्धे उक्तम् 'अन्तिमदारस्स विवरण' इति तद् गाथापेक्षया समवसेयम् , अन्यथा तत्र द्वितीयेय गाथा—

" खित्ताण व अलभे कयसंलेहे व तरुणपडिकम्मे
एएहिं कारणेहिं वुड्ढावास वियाणाहि ॥ "

पठ्यतेऽस्यार्थः—क्षेत्राणां मासकल्पादियोग्यानामलम्भेऽप्राप्तौ कृतसलेखे विहिततपोविहितकृशतायामनशनार्थं तरुणप्रतिकर्मणि सान्ध्योत्तीर्णसाधुबलोपागे चवाशब्दौ समुच्चयार्थौ । एतैः पूर्वोक्तैः कारणैर्हेतुभिर्वृद्धावास दीर्घकालवसन विजानीहि अवगच्छ इत्युत्तरार्धम् ।

'न चैव मासकल्पस्य भवन्मते व्युच्छेदो न' इत्याह—

मासाइ विहारो पुण गीयत्थाण वन्निओ समये ।
एतोच्चियभणियमिणं गीयत्थस्सेव य विहारो ॥१४०॥

प्रतीतार्थां ॥

तथा चोक्तम्—

गीयत्थो य विहारो बीओ गीयत्थमीसओ भणिओ ।
एत्तो तइयविहारो नाणुन्नाओ जिणिंदेहिं ॥ १४३ ॥

इत्यादिमासकल्पविचारो द्वाविंशोऽधिकार: ॥

इदानीं त्रयोविंशमाह—

सुत्तेगदेसमेगे घेत्तुं जंपंति असुणियविभागा ।
उज्जलवेसो सूरीण सव्वया होइ सव्वेसिं ॥ १४४ ॥

व्याख्या–सूत्रैकदेशं सिद्धान्तविभाग ' आयरियगिलाणाणं मइला पुणोवि धोव्वंति । इत्यादि लक्षणमेके केचन, गृहीत्वा स्वीकृ य, जल्पन्ति वदन्ति, अश्रुणितविभागा अज्ञाततद्विशेषाः, उज्ज्वलवेषो निर्म्मलवस्त्रधरणम्, सूरीणामाचार्याणाम्, सर्व्वदा नित्यम्, भवति जायते, सर्व्वेषा समस्तानाम्, इति गाथार्थः॥

अत्रोत्तरमाह—

त पि न सव्वाण पि हु जम्हा ववहार भणियमेवं तु ।
पयडियविभायमग्गं विउडियमदमइपसरम् ॥ १४५ ॥

व्याख्या–तदपि सर्व्वदोज्ज्वलवेषधारणमपि न केवल पूर्व्वोक्तमित्यपि शब्दार्थः, न इति निषेधे, सर्व्वेषामपि सकलसूरीणाम्, हु' पादपूरणे, यस्माद्, व्यवहारे भणित छेदग्रन्थोक्तम्, एवमित्थम्, इति वाक्यसमाप्तौ, प्रकटितविभागमार्गं दर्शितनैयत्यम्, विकुटितमन्दमतिमतिप्रसर चूर्णितततुच्छशेमुषीकबुद्धिप्रागल्भ्यम्, इति गाथार्थ. ॥

तदेव गाथाद्वयेनाह—

भत्ते पाणे धोवणपससणाऽऽत्थपायसोए य ।
आयरिए अइसेसो अणइसेसो अणायरिए ॥ १४६ ॥

एए पुण अइसेसे उवजीवइ न यावि कोवि ।
दढदेहो निदरिसणं एत्थ भवे अज्जसमुद्दा य मगूय ॥ १४७ ॥

व्याख्या–भक्ते शोभन भक्त, विभिन्नस्थाने आनेतव्यम, ' पाणेत्ति ' पानी य शुद्धम्, तथैव ' धोवणति ' वस्त्राणां धावनम्, प्रसंसनं श्लाघा तद्गुणानाम्, हस्तपादशौच करचरणमलप्रक्षालनम्, च समुच्चये, आचार्ये सूरौ, अतिशेषा अतिशया भवन्ति, एत इत्यध्याहार, अनतिशेषा अनतिशया भवन्ति, अनाचार्ये सामान्यसाधौ । एतान्, पुनरतिशेषान्, उपजीवन सेवन, न वापि नैव कोऽपि कश्चित्, दृढदेहो बलिष्ठसंहनन, सूरिरित्यध्याहारः, निदर्शने दृष्टान्तः, अत्र अतिशयधारणे, भवेज्जायेत, आर्यसमुद्रा मङ्गू, एतन्नामानः सूरय, बहुवचन चात्र पूज्यत्वात्, चकारावत्र समुच्चयार्थौ, इति गाथाद्वयार्थः । भावार्थस्तु कथानकादवसेयस्तच्चेदम्—

किल भृगुकच्छे नगर आर्यसमुद्रमङ्ग्वभिधानौ सूरी विहरन्तौ समागतौ । तत्र प्रथमो दृढसंहननो द्वितीयस्तु न तथेति ।ततो द्वितीयः सर्वानाचार्यातिशयानुपजीवति, प्रथमस्तु नेति । इतश्च तत्रैव पुरे साकटिकवैकटिकौ यथार्थाभिधानौ श्रावकौ स्त । तौ चान्यदा आर्यसमुद्राचार्यमभिवन्द्य सन्देहात् प्रपृच्छतु —" भगवन् ! किमिति भवन्त आचार्यातिशयान्न कुर्वन्ति, मङ्गुसूरयस्तु कुर्वते" । तत स्तैरवदातविदितजिनवचनैर्मत्सररहितं प्रोचे–" अत्र भवद्भ्यामेव दृष्टान्त । यथाहि–दृढशकटस्य दृढविकटभाजनस्य च परिकर्मा च परिकर्माहत्रबन्धनादिक न क्रियते दृढेतरस्य तु भवद्भ्या क्रियते । एवमावयोरपि । तथाहि–मम शरीर दृढं प्रायोग्यादिरहितमपि संयम कर्तुमुत्सहते, इतरस्य तु न । इत्यसौ सदा ता

नुपजीवति । इति श्रुत्वा तु विगतसन्देहो स्वस्थान गतौ, इति ॥

इत्थं स्थिते जीवोपदेशमाह—

मलमइलवत्थदेहाण भावकप्पूरपरपुन्नाणं ।
दढदेहाण सूरीण भणसु मा किंपि पडिकुलं ॥ १४८ ॥

व्याख्या—मलमलिनवस्त्रदेहानां रजोविच्छायवसनशरीराणाम्, भावकर्पूर-परमार्थघनसार सयम एव जीवसौरभ्यकर्तृत्वेन तस्य पूरः संघातस्तेन पूर्णा भृता पुण्या वा पवित्रास्तेषां, दृढदेहानामुत्तमसहननानाम, सूरीणां प्रभूणाम, भण ब्रूहि मेति निषेधे, किमपि न केवल बहिरपरेर्थः, प्रतिकुलमुल्लण्ठम्, इति गाथार्थः ॥

## सूरिमलधरणविचारस्समाप्तस्त्रयोविंशोऽधिकार ॥

इतश्चतुर्विंशतितमः प्रारभ्यते—

अमुणियमुणीणचरणा केइ मज्जण्हकालसमयंमि ।
इत्थीण केवलाणं कहिंति धम्म भवाभिरया ॥ १४९ ॥

व्याख्या—अमुणितमुनीनचरणा अविदितयतीशचारित्राः, केऽप्येके, मध्याह्न कालसमये प्रहरद्वयोर्ध्वम्, कथयन्ति प्रतिपादयन्ति, धर्मं श्रुतधर्मादिकम्, किं विशिष्टाः ? भवाभिरताः संसारसक्ता, इति गाथार्थः ॥

एतदपि न सङ्गतमित्याह—

सिद्धन्तामयपडिपुन्न कन्नपुडयाण सम्मयं नेय ।
जम्हा इय कहणंमी एए दोसा पसज्जति ॥ १५० ॥

व्याख्या—सिद्धान्तामृतप्रतिपूर्णकर्णपुटकानां आगमसुधासम्भृतश्रवणचडुर्पत्राणाम्, संमतमभिप्रेतम्, नेति निषेधे, इदमित्थं धर्मकथनम्, यस्माद्, इत्येवम्, कथने प्रतिपादने, एते वक्ष्यमाणाः, दोषा दूषणानि, प्रसज्यन्ते प्रादुर्भवन्ति, इति गाथार्थः ॥

तानेवाह—

इत्थिकहा उ अगुत्ती अकालचारित्तणं तहा संका।
पलिमंथो तह दसकालियंमि अन्नं इमं भणियं ॥ १५१ ॥

व्याख्या–स्त्रीषु–केवलनारीषु कथा–धर्मकथनमिदं चोत्तराध्ययने द्वितीयव्याख्याने कथितम्, तु, समुच्चये, अगुप्ति अत्यहं स्त्रीन्द्रियदर्शनतो ब्रह्मचर्यारक्षा, अकालचारित्वं अप्रस्तावागमनञ्च, नहि तासां मध्याह्ने केवलानां सम्मुखागमे आगमनमनुज्ञातम्, तथा समुच्चयार्थं, शङ्का सन्देहो नूनं मध्याह्नमेव मन्ये किमप्यकार्यमेता करिष्यन्तीत्येवं पद्मपतिचिन्तनरूपा, पलिमन्थः स्वकार्यव्याघातः साधूनाम्, तथा परम्, दशवैकालिके समयप्रसिद्धे, अन्यदपरम्, इदं वक्ष्यमाणम्, भणितमुक्तम्, इति गाथार्थः ॥

तदेव श्लोकपञ्चकेनाह—

विभूसा इत्थिसंसग्गी पणीअं रसभोयणं।
नरस्सत्तगवेसिस्स विसं तालउडं जहा ॥ १५२ ॥

जहा कुक्कुडपोअस्स निच्चं कुललओ भयं।
एवं खु बंभयारिस्स इत्थीविग्गहओ भयं ॥ १५३ ॥

हत्थपायपडिच्छिन्नं कन्ननासविगप्पियं।
अवि वाससयं नारिं बंभचारी विवज्जए ॥ १५४ ॥

अंगपच्चंगसंठाणं चारुल्लवियपेहियं।
इत्थीणं तं न निज्झाए कामरागविवड्ढणं ॥ १५५ ॥

चित्तभित्तिं न निज्झाए नारिं वा सुअलंकियं।
भक्खरं पिव दट्ठूणं दिट्ठिं पडिसमाहरे ॥ १५६ ॥

सर्व्वा अपि प्रकटार्था।

यत एवमत आह—

एत्तो चिय केइ पुव्वसूरिणो मोक्खसोक्खतल्लिच्छा।
आसीसंपि हु दिंता अहोमुहाए व दिट्टीए ॥ १५७ ॥

व्याख्या—एतस्मादेव कारणात् केऽपि पुण्यभाजः पूर्व्वसूरयश्चिरन्तनाचार्या मोक्षसौख्यतल्लिप्सवो निर्वाणसातैकनिष्ठा आशिषमपि धर्म्मलाभमपि शेषः,न केवलं धर्म्मकथामित्यपिशब्दार्थः, हु पूर्व्ववत्, अदुर्दत्तवन्तः श्राविकाणा मितिशेषः अधोमुखया न्यग्भूतवक्त्रया दृष्ट्या लोचनेनेति गाथार्थः ॥

अत्रापि जीवानुशिक्षामाह—

सिद्धिवधूवरसुहसंगलालसो जीव जइ तुम ता मा।
कहसु तुम जिणधम्मं अकालचारीसु इत्थीसु ॥ १५८ ॥

सिद्धिवधूवरसुखसङ्गलालसो मुक्तिकान्ताप्रधानसाताभिष्वङ्गलम्पटो जीव प्राणिन्! यदि त्वं भवान् तस्माद् मा निषेधे, कथय वद जिनधर्म्मं सर्वज्ञवृष, अकालचारिणीषु अप्रस्तावागतासु स्त्रीषु नारीषु इति गाथार्थः ॥

केवलस्त्रीव्याख्यानकथनश्चतुर्विंशतितमोधिकार

साम्प्रत पञ्चविंशमाह—

मुद्धजणहिययसंठियदसणवररयणलूहणासयण्हा।
अन्नायसाहुसावयजोगा अन्ने भणंतेवं ॥ १५९ ॥

मुग्धमति स्वल्पमतिर्यो जनो लोकस्तस्य हृदय मानस तत्र संस्थितमाश्रित दर्शन सम्यक्त्वं तदेव वररत्नं प्रधानमाणिक्य तस्य 'लूहण' देशीभाषयाऽपहरण तत्र सतृष्णा बद्धाभिप्रा अज्ञानसाधुश्रावकयोगाः—अविदितयतिश्राद्धव्यापारा भणन्ति जल्पन्त्येवं वक्ष्यमाणनीत्या । अयमाशयः—वक्ष्यमाणकथनेऽपि मुग्धश्रावकाणा दर्शन [illegible] भवतीति गाथार्थः ॥

तदेवाह—

पासत्थाई सावयजणस्स नो हौंति वदणिज्जाउ ।
त नो, जम्हा कत्थइ नो दीसइ भणियमेवेति ॥ १६० ॥

व्याख्या—पार्श्वस्थादयः समयप्रसिद्धाः श्रावकजनस्य श्राद्धलोकस्य नो नैव भवन्ति जायन्ते वन्दनीया नमस्कर्तव्या' । तुः पूरणे, तद्वन्दनाकरण नो नैव, यस्मात्कुत्रापि कस्मिंश्चिदपि शास्त्रे नो दृश्यते नावलोक्यते भणितमुक्तम्, एव पूर्वोक्तप्रकारेण, इतिर्वाक्यसमाप्ताविति गाथार्थः ॥

यद्भणित तत्पूर्वपक्ष गाथाद्वयेनाह—

वदावदविभागो संविग्गेयरजईण सव्वत्थ ।
जं पुण दसणसत्तरिवयण भणियं न तस्सत्थि ॥ १६१ ॥

अगेसु तह अणगेसु छेयग्गथेसु पयरणेसु च ।
सवाओ ता कह त भवे पमाण पमाणीण ॥ १६२ ॥

व्याख्या—वन्द्यावन्द्यविभागो नमस्करणीयानमस्करणीयविशेषो भणितः संविग्नेतरयतीनां-सुविहितेतरसाधूनां सर्वत्र सर्वस्मिन् सूत्रे इति शेष । यत्पुनर्दर्शनसप्ततिकावचन-तन्नाममकरणगदितं " समणाण सावयाण य अवदणिज्जा जिणमयमि " इत्यादिलक्षण न नैव तस्य सप्ततिकाभणितस्यास्ति विद्यते अङ्गेषु आचारादिषु अनङ्गेषु औपपातिकादिषु छेदग्रन्थेषु निशीथशास्त्रादिषु प्रकरणेषु उपदेशमालादिषु, च' समुच्चये संवादस्तत्सदृशभणन, तस्मात् कथ केन प्रकारेण तत्सप्ततिकाभणन भवेज्जायेत प्रमाण व्यवस्थापक प्रमाणिनां यथावस्थितवस्तुवेदिनाम् । इति गाथार्थः ॥

किम् ? इत्यत आह—

पयरणवयण जम्हा सवइय चलु भवे पमाणमिह ।
सिद्धत वयणेहिं नो इयरा अइपसगाओ ॥ १६३ ॥

व्याख्या—प्रकरणवचनमर्वाचीनसाधुविरचित शास्त्र यस्मात् संवदितमेवावितथ, खलुरवधारणे, स च योजित एव भवेज्जायेत प्रमाण व्यवस्थापकम्, इह मतीन्द्रियवचने अनुस्वारः पूर्ववत् सिद्धान्तवचनैरागमभणितै,

नो नैव, इतरथा संवादाभावे, कुतः ? अतिप्रसङ्गात्–स्वाभिप्रायवशतोऽन्यथा वाऽन्यथाकरणतो अनवस्थात इति गाथार्थः ॥

अथ यतिवच्छ्रावकाणामपि द्रव्य तदित्याह—

> जइ जइकिच सव्वपि सावयाणपि हुज्ज करणीयं ।
> तो इक्को चिय धम्मो हवेज्ज दुविहो विरुज्झिज्जा ॥ १६४ ॥

व्याख्या—यदीत्यभ्युपगमे, यतिकृत्य साध्वनुष्ठान सर्व्वमपि निःशेष श्रावकाणामपि श्राद्धानां, न केवलं यतीनामित्यपिशब्दार्थः भवेज्जायेत करणीयं कृत्य तत एक एव धर्म्मो भवेत्, द्विविधो द्विप्रकारो विरुध्येत विघटेतेति गाथार्थ ॥

अत्रैवार्थे कारणान्तरमाह—

> जह सपुन्नगुणोवि हु न वदिओ वज्जपाणिणा भरहो ।
> तो नज्जइ सड्ढाण वेसो चिय होइ नमणीओ ॥ १६५ ॥

व्याख्या—तथाऽभ्युच्चयार्थः, संपूर्णगुणोऽपि सुविशुद्धज्ञानादिरपि हुः पूरणे, न वन्दितो न नमस्कृतो वज्रपाणिनेन्द्रेण भरतः प्रथमचक्री वेषरहित इति शेषः, तस्माद् ज्ञायते बुध्यते श्राद्धाना श्रावकाणा वेष एव रजोहरणादिको भवति जायते नमनीयो वन्द्य इति गाथार्थः ॥

सूत्रकृतसम्बन्ध गाथाद्वयमाह—

> किंचं जइ सावयाण नमण नो संमय भवे एयं ।
> पासत्थाईयाण ता कह उवएसमालाए ॥ १६६ ॥
>
> सिरिधम्मदासगणिणा न वारिअ वारियं च अन्नेसिं ।
> "'परतित्थियाण पणमण' इच्चाइवयणओ पयडं ॥ १६७ ॥

व्याख्या—किञ्चाभ्युच्चये, यदि विकल्पार्थः, श्रावकाणां श्राद्धानां वन्दनं नमन नो नैव सम्मत भवेज्जायेत एतत्पूर्वोक्तम्, केषाम् ? इत्याह—पार्श्व-

त्यादीनां प्रतीतानां, अत्र कथं केन प्रकारेणोपदेशमालायां श्रीधर्म्मदासगणिना एवंनाम्ना कर्त्रा न वारितं निषिद्धं, वारितं पुनर्निषिद्धमन्येषां शाक्यादीनां परतीर्थिकानां प्रणमनमित्यादिवचनतः प्रकटं प्रसिद्धम्, आदिग्रहणात् " उच्छा वणरगुणणभत्तिराग च सक्कार सम्माणदाण विणयं च वज्जेइ इति दृश्य सुबोध चेति गाथार्थः ॥

पराभिमायमाशङ्क्याह—

आलावो संवासो इच्चाईय तु मुणिजणस्सेइ ।
एव नो जइ तो तेवि पुव्वभणिया उ पासत्था ॥ १६८ ॥

व्याख्या—आलापः स्तोकभणनं, संवासस्तु एकत्रनिवसनमित्यादिकं पुनर्मुनिजनस्यैव साधुलोकस्यैव, तेन हि तेषां निष्कारणं न कर्तव्यं वन्दनादिकम् कारणे तु कर्त्तव्यमिति प्रागेव चर्चितम् । आदिग्रहणेन " धीसमो सयवो पसगो य हीणायारेहिं सम सव्वजिणिंदेहिं पडिकुट्ठो ।" इति दृश्यम् । तथा च तत्रोक्तं बलाद्यतिव्यांकुलीभवतीति । किञ्चेतः " श्रावकधर्मं वक्ष्ये " इति भणता हरिभद्रता भिक्षाधिकारिता दर्शिता । " स च वदइ पडिपुच्छइ-" इत्यादिगाथाभिरुक्तं सूत्रे, एवमित्थं नो नैव यदि, ततस्तेपि य एव प्रतिपाद यन्ति पूर्व्वभणितान् " सुत्तत्थपोरिसी न करेइ "–इत्यादिकात् द्वितीयेऽधिकारे पार्श्वस्थाः शिथिला उपलक्षणत्वादवसन्नादयश्चेति गाथार्थः ॥

ततः किमित्याह—

कं वदंतु वराया धम्मत्थी सावया तओ तुब्भे ।
सयममडियाउ मूढा अन्नेवि मा भमाडेह ॥ १६९ ॥

व्याख्या—कं साधु वन्दन्तु नमस्कुर्व्वन्तु वराका अनुकम्पनीया धर्म्मार्थिनो द्यपलम्यटाः श्रावकाः श्राद्धाः ? तस्मात् 'तुब्भे'त्ति यूयं स्वयमात्मना भ्रान्ता नष्टसद्बोधा मूढा ज्ञानविकला अन्यान् श्रावकादीन् 'मा' निषेधे भ्रमयत नष्टसद्बोधान्कुरुतेति गाथार्थः ॥

ननु यद्येव ततः कोप्यत्रन्यो नास्ति इत्याह—

संघेण पुणो याही जो विहिओ होज्ज सो उ नो वंदो।
पासत्थाई सड्ढाण सव्वहा एस परमत्थो ॥ १७० ॥

व्याख्या—सङ्घेन प्रतीतेन पुनः बहिस्ताद्योऽनिर्दिष्टनामा विहितः कृतः भवेज्जायेत स पुनर्नो नैव वन्द्यो नमस्करणीयः पार्श्वस्थादि प्रतीतः श्राद्धानां श्रावकाणां सर्व्वथा सर्वैः प्रकारैरेषो निर्दिष्टरूपपरमार्थस्तत्त्वमिति गाथार्थः ॥

सूत्रकृतसम्बन्धां गाथामाह—

किंच सिरिपचकप्पे दव्वलिंगस्स धारणे भणिओ।
एस गुणो सूरिहिं इमाहिं गाहाहि पयडत्थो ॥ १७१ ॥

व्याख्या—किञ्चेत्यभ्युच्चये। श्रीपञ्चकल्पे छेदग्रन्थे द्रव्यलिङ्गस्य रजो हरणादेर्धारणे स्वीकारे भणित उक्त एष वक्ष्यमाणो गुणो लष्टत्व सूरिभिस्तत्कारकैरिमाभिर्वक्ष्यमाणाभिर्गाथाभिश्छन्दोविशेषरूपाभि प्रकटार्थोः निश्चिताभिधेय इति गाथार्थः ॥

ता एवाह—

एवं तु दव्वलिंग भावे समणत्तण तु नायव्वं।
को उ गुणो दव्वलिंगे भन्नइ इणमो सुणसु वोच्छ ॥ १७२ ॥

सक्कारवन्दणनमसणा य पूयणकरणा य लिंगकप्पम्मि।
पत्तेयबुद्धमाई लिंगे छउमत्थओ गहण ॥ १७३ ॥

दट्ठूण दव्वलिंग कुव्वते याणि इदमाईवि।
लिंगम्मि अविज्जते न नज्जइ एस विरओत्ति ॥ १७४ ॥

पत्तेयबुद्धो जाव उ गिहिलिंगी अह्व अन्नलिंगी वा।
देवावि ता न पूए मा पुज्ज होहिइ कुलिंगा ॥ १७५ ॥

लिङ्गकप्पो पञ्चकल्पो भणितः, प्रकटार्थश्च, विशेषावश्यकेपि लिङ्गस्य पूज्यता सपूर्व्वपक्षोत्तरभणिता अमूभिर्गाथाभिः।

व्याख्या – एकान्तेनैव सर्व्वथा तद्धर्म्मकथन न नैव सुन्दर भव्यम्, येन तासां साध्वीनां प्रतिषेधो निराकरण सिद्धान्तदेशनाया आगमकथनस्य। कया प्रतिषेधः ? कल्पस्थितयैव गाथयेत्यर्थः।

कल्पगाथामेवाह—

कुसमयसुईणमहणो बिबोहओ भवियपुडरीयाण।
धम्मो जिणपन्नत्तो पकप्पजइणा कहेयव्वो ॥ १८३ ॥

व्याख्या—कुसमयश्रुतीनां कुसिद्धान्तमतीना मथनो विनाशकः, विबोधको विकाशको भव्यपुण्डरीकाणां मुक्तियोग्यप्राणिशतपत्राणां, धर्म्मो दानादिको जिनप्रज्ञप्तो मुनीन्द्रगदित' प्रकल्पयतिना निशीथज्ञसाधुना कथयितव्यो न पुनः साध्व्येति हृदयमिति गाथार्थः ॥

ननु यदि तासां स दीयते, ततो निन्द्य तद्धर्म्मकथनमित्याह—

संपइ पुणो न दिज्जइ पकप्पगंथस्स ताण सुत्तत्थो।
जइया वि य दिज्जंतो तइया विय एस पडिसेहो॥ १८४ ॥

व्याख्या-साम्प्रतमधुना पुनः नैव दीयते वितीर्यते प्रकल्पग्रन्थस्य निशीथस्य तासां-आर्यिकाणां सूत्रार्थः सूत्रेण पद्धत्या सहितोऽर्थोऽभिधेयः सूत्रार्थ उभयमिति हृदयम्, यदापि वा दीयते वितीर्यते स्म, तदापि च तस्मिन्नपि काले एष व्याख्यानकरणलक्षणः प्रतिषेधो निवारणमिति गाथार्थः ॥

अमुमेवार्थं दृष्टान्तपूर्व्वकं दर्शयन्नाह—

हरिभद्दधम्मजणणीए किंच जाइणिपवत्तिणीए वि।
एगो वि गाहत्थो नो सिट्ठो मुणियतत्ताए ॥ १८५ ॥

व्याख्या—सूचनात्सूत्रस्य हरिभद्रसूरिधर्म्मजनन्यापि धर्म्मदात्रीत्वेन प्रतिपन्नमात्रा शिक्षाभ्युदये याकिनीप्रवर्तिन्या एतन्नाममहत्तरया न केवलमन्याभिरित्यपि शब्दार्थः, एकोऽपि च गाथार्थोऽभिधेय आस्तां प्रभूत इत्यपेरर्थो नो नैव शिष्ट' कथितो मुणिततत्त्वया ज्ञातपरमार्थया, तथा च " चक्किदुग

हरि पणगम् " इत्यादिगाथायाः स्वार्थं पृष्टा हरिभद्रभट्टेन, न च तया कथित',
इति सुमतीतोऽयमर्थः । इति गाथार्थः ॥

एवं ज्ञाते जीवोपदेशमाह—

बहु मन्नसु मा चरियं अमुणियतत्ताण माण ता जीव ।
जइ सनिवारियाओ ता वारसु महुरवक्केण ॥ १८६ ॥

व्याख्या—बहु मन्यस्व भव्यमिदमिति मंस्थाः,मा इति निषेधे, चरितं धर्मकथ नलक्षणम्, अमुणिततत्त्वानाम्, अविदितपरमार्थानाम्, तासाम्–आर्यिकाणाम्, तस्माज्जीव ! आत्मन् ! यदि विकल्पार्थः, तिष्ठन्ति सनिवारिता' निषिद्धाः, ततो वारय निषेधय, मधुरवाक्येन–कोमलवचसेति गाथार्थः ॥

इति आर्यिकाधर्मकथनवर्णनः सप्तविंशोऽधिकार. ॥

इत अष्टाविंशं गाथाद्वयेन आह—

नियमंतरायमगणिय एगे जपंति कुगहगहगहिया ।
जिणपडिमाण पूया पुप्फाईएहिं कायव्वा ॥ १८७ ॥

वच्छाईएहिं नो पुण जेणं तं भक्खणे कोवि ।
पडिही भवधकूवे अम्हनिमित्तं इय मईए ॥ १८८ ॥

व्याख्या—निजकान्तरायमगणित्वा-अविभाव्य,एके केचन. मकारोऽलाक्षणिको. जल्पन्ति वदन्ति, अयमाशयः- एवं भणने महदन्तरायो भवति, किं विशिष्टा' ? कुग्रहग्रहगृहिताः कुबोधपिशाचस्वीकृता' । जिनप्रतिमानाम्, सर्वज्ञप्रतिकृतीनाम्, पुष्पादिभिः कुसुमवासादिभि., [ पूजा ], कर्त्तव्या विधेया । वस्त्रादिकैः वसनाल ङ्कारादिभिर्नो नैव, पुनर्येन तत् द्रव्यभक्षणे वस्त्रादिवित्ताऽऽदाने, कोऽप्यनिर्दिष्ट-नामा, पतिष्यति गमिष्यति, भवान्धकूपे ससारविषमाऽवटे, अस्मन्निमित्तम् अस्मत्कारणम्, इति मत्या अनेन बोधेन, इति गाथाद्वयार्थः ॥

एतन्निराकरणार्थं गाथाद्वयेन आह—

आगममजुत्तिजुत्तो इय बोहो जेण सुविहियजणो वि ।
बहु मन्नइ महद्दकय वत्थाईपूयणं बहहा ॥ १८९ ॥

सक्कारवत्तियाए वयणेण सो उ वत्थमाइत्ति ।
भणिओ तो तक्करणं तहाय ववहारउत्तं च ॥ १०० ॥

व्याख्या–आगममार्गोत्तीर्णं, सिद्धान्तपदवीभ्रष्टं, इत्येवम्, भावो मतम्, येन सुविहितजनोऽपि सुसाधुलोकोऽपि, न केवलमन्यः, इत्यपेरर्थः, बहु मन्यते अनुमोदते श्राद्धकृतम्–श्रावकविहितम्, वस्त्रादिपूजनं वसनालङ्काराद्यभ्यर्चनम्, बहुधा–अनेकधा, ' सत्कारप्रत्ययम् ' इत्यादिवचनेन, स पुनः सत्कारो वस्त्रादिभिः, प्रकार' पूर्ववत् भणित उक्तः । तथा चोक्तम्—

मल्लाईएहिं पूया सक्कारो परमवत्थमाईहिं ।
अन्ने वि वज्झओ इह दुहा वि दव्वत्थओ एसो ॥

ततस्तत्करणं सत्कारविधानम्, तथा पर व्यवहारोक्त च–छेदमन्यभणितम्, इति गाथाद्वयार्थ ॥

तदेवाह—

लक्खणजुत्ता पडिमा पासाईआ समत्त-लंकारा । –
पल्हायइ जह उ मण तह निज्जरमो वियाणाहि ॥ १०१ ॥

व्याख्या–लक्षणयुक्ता परिपूर्णाङ्गादिसहिता, प्रासादिका द्रष्टार- द्रष्टारं प्रति प्रमोदजनिका, समाप्तालङ्कारा नि शेषभूषणा, प्रह्लादयति सुखयति, यथा येन प्रकारेण, तथा तन प्रकारेण, निर्जरा कर्मह्रासलक्षणाम् ओ इति निपातः पादपूरणार्थः, विजानीहि बुध्यस्व । ' समा ताळङ्कारा' भणनाद् भवन्मतव्यवच्छेद , इति गाथार्थं ॥

सूत्रेणैव विहितपातना गाथामाह—

किंच जइ एव भीरू तुम्हे ता मा करेह चेइहरं ।
पडिमाओ पूय पि हु होरिंति जओ इमे दोसा ॥ १०२ ॥

व्याख्या–किं च अभ्युच्चये यद्येवमित्थम्–' अस्मन्निमित्त कर्मबन्धो मा भवतु ' इति भीरवो भयालवः, ' तुम्ह 'त्ति यूयम्, ततो मा इति निषेधे, कुरुत विधत्त, चैत्यगृह जिनमन्दिरम् । प्रतिमा, जिनबिम्बानि, पूजामपि सपर्यांम्, हु

पूरणे, भविष्यन्ति–उत्पत्स्यन्ते, यतो–यस्माद्, अमी 'वक्ष्यमाणा', दोषा दूष णानि, इति गाथार्थः ॥

तानेवाह—

> भज्जेज्ज व अवणेज्ज व कोई तो तुम्ह कम्मबंधो उ।
> तम्हा बुज्झह पुन्न पाव वा नियगपरिणामा ॥ १९३ ॥

व्याख्या- विनाशयेद्, अपनयेद्–स्थानान्तरे कुर्याद्, वाशब्द' समुच्चयार्थः–उपलक्षणत्वाद् मत्सरादिक वा तदुपरि विदध्याद्, कोऽपि–एकः, ततः, तु' म्हेत्ति युष्माकं भवताम, कर्मबन्ध एव ज्ञानावरणीयाद्युपश्लेष . तु'–एवकारार्थं, भवन्निमित्तत्वादिति हृदयम। तस्माद्, बुध्यध्वं जानीत, पुण्य शुभकर्म, पापं –तद्विपरीतम, वा शब्द' समुच्चये, निजकपरिणामात् स्वाभिप्रायाद्। इति गाथार्थः ॥

परिणाममेव व्यक्तीकुर्वन्नाह—

> दितस्स पुन्नमउल भक्खंतस्स य पुणो महापावं।
> कुसलेयरभावाओ एवं चिय जिणगिहाइसु वि ॥ १९४ ॥

व्याख्या–ददतः प्रयच्छतो भव्यस्य ' जिनाय वस्त्रादि ' इति शेष , पुण्य– शुभम, अतुलम–अनन्यसदृशम, भक्षयतश्च–पुनरश्नतः, महापाप–गुरुकिल्बिषम, कुशलेतरभावाद्–प्रधानाप्रधानान्तःकरणाद्, एवम–इत्थम, जिनगृहादिष्वपि– सर्वज्ञमन्दिर–प्रतिमादिकरणादिषु, इति गाथार्थः ॥

व्यतिरेकमाह—

> जइ पुण तह कायव्वं जह दव्वं नेय होइ चेइहर।
> ता कह सहल वयण एय सिद्धंतसुपसिद्धं ॥ १९५ ॥

व्याख्या–यदि पुनस्तथा कर्तव्यम, यथा नैव भवति द्रव्य चैत्यगृहे, ततः कथ सफल -चरितार्थं वचनमेतद्–उपदेशपदपठितम, अथतः सिद्धान्तसुप्रसिद्धम? इति गाथार्थः ॥

तदेव गाथात्रयेणाह—

जिणपवयण–विड्ढिकरं पभावणं नाण दंसणगुणाणं ।
रक्खंतो जिणदव्वं परित्तसंसारिओ होइ ॥ १०६ ॥

जिणपवयण–विड्ढिकरं पभावणं नाण–दंसणगुणाणं ।
वड्ढिंतो जिणदव्वं तित्थयरत्ताइअं लहइ ॥ १०७ ॥

जिणपवयण–विड्ढिकरं पभावणं नाण–दंसणगुणाणं ।
भक्खंतो जिणदव्वं अणंतसंसारिओ होइ ॥ १०८ ॥

सुगमा । अयमाशय –न मने जिनद्रव्याभावात् कथ रक्षण–वर्धन–भक्षण संभवः ? तथा तत्रैव—

"चेइअदव्वं साहारणं च जो दुहइ मोहियमईओ ।
धम्मं च सो न याणइ अहवा बद्धाउओ पुव्विं ॥

चेइयदव्वविणासे तद्दव्वविणासणे दुविहभेए ।
साहू उविक्खमाणो अणंतसंसारिओ भणिओ ॥"

व्याख्या–यथा पञ्चकल्प भणितम्–जया पुण पुव्वपवत्ताणि खेत–हिरण्णाणि दुपय चउप्पयाई जइ भंड वा चेइयाणं लिंगत्था वा चेइयदव्वं राउलबलेण खायंति, रायभडाई ॥ अभिउंजेज्जा, तया तव नियमसंपउत्तो वि साहू जइ न मोयइ, वावारे वा न करेइ तथा तस्स सुद्धी न हवइ, आसायणा य भवइ ।" एतच्च कथ सार्थकम् ? किंच क्रुनकत्वाद् देवगृहभङ्गे कालेन द्रव्याभावात् कथ पुनस्तदुद्धार[1] क्रियते इति ॥

सुखसम्बन्धा गाथामाह—

अन्न चासुत्तरय कुणंतओ वि हू सुहाउ भावाउ ।
पावइ पुन्नं सल्लुद्धरो व्व वीरस्स कित्तु सुहं ॥ १०९ ॥

व्याख्या–अन्यच्च–अपर च, अशुभनरकम्–अनिश्चयानिष्टम्, कुर्वाणो–विदधान , हु पूरणे, शुभात्–प्रशस्ताद्, भावाद्–अन्त करणात्, प्राप्नोति–पुण्य

---

[1] पुव्वपवत्ताणि

शल्योद्धरणत्र-श्रवणकीलिकाऽपनेतृनरवत्, वीरस्य चरमतीर्थंकरस्य, किं पुन', शुभं-प्रशस्तम्, अयमाशय -येन कीलिका भगवच्छ्रवणतो निष्कासिता तेन महती व्यथोत्पादिता, येन क्षिप्ता तेन स्तोकतरा, परं शुभेतराशयादेकस्य स्वर्गः, अपरस्य नरक' फलम्, इति गाथार्थः ॥

इत्यमवस्थिते जीवोपदेशमाह—

सुपसत्थवत्थ-कणयाइवत्थुवित्थाररेहिरं पडिमं ।
कारावसु देसंतो रे जिय ! जइ महसि मणइट्ठं ॥ २०० ॥

व्याख्या-सुप्रशस्तानि-अतिशयरम्याणि तानि च तानि वस्त्रकनकादिवस्तूनि च-वसन-चामीकरालङ्कार-कर्पूरादिद्रव्याणि तेषां विस्तारः-प्रपञ्चस्तेन ' रेहिर ' इति देशीभाषया शोभमाना प्रतिमा जिनबिम्बं कारय विधापय, दिशन्-धर्मकथां कुर्वन्, रे जीव ! भो आत्मन् ! यदि महसि-वाञ्छसि मन इष्टं-चित्ताभिप्रेतम् । अयमाशय -जिनवस्त्रादिनिवारणे अन्तरायकर्मवशात् अभीष्टलाभस्तव न भविष्यति । इति गाथार्थः ।।

॥ इति जिनद्रव्योत्पादवर्णनोऽयमष्टाविंशोऽधिकार' ॥

अधुनैकोनत्रिंशमाह—

अगीयत्त अवरे उ अत्तणो देसयंति इय चिंता ।
सव्वावत्थासुं वि य पडिसिद्धमसुद्धमन्नाइं ॥ २०१ ॥

व्याख्या-अगीतत्वं-सूत्रार्थाकोविदत्वम्, अपरे-पुनरन्ये, आत्मन -स्वस्य, देशयन्ति-कथयन्ति, 'इय'त्ति " इतेरिय. " इत्यनेन इयादेशे रूपमिदम्, ततश्च इति-पूर्वोक्तप्रकारेण ब्रुवाणाः-प्रतिपादयन्तः, सर्वावस्थास्वपि,प्रतिषिद्ध-निवारितम्, अशुद्धम्-आधाकर्मादिदूषितम्,अन्नादि-भोजनपानादि, इति गाथार्थः ॥

अस्यार्थस्य निवारणायाह—

मयमेय न रमइ माणसंमि गुरुगच्छवुड्ढिसीलाण ।
सूरीण जं पयडं ववहारस्सेरिसं वयणं ॥ २०२ ॥

व्याख्या-मतम्-अभिप्राय', एतत्-पूर्वोक्तं । न रमते-न क्रीडति मानसे चित्ते । केषाम् ? गुरुगच्छवृद्धिशीलानाम्-आचार्य-नन्दिशष्यसमुदायोपचयकारणस्व भावानाम्, सूरीणां-प्रभूणाम्, यस्मात् प्रकट-गीतार्थविनिश्चितम्, व्यवहारस्य-छेद ग्रन्थस्य ईदृश-वक्ष्यमाणस्वरूपम्, वचनं-भणिति, इति गाथार्थः ॥

तदेवाह—

जावज्जीव गुरुणो सुद्धमसुद्धेण होइ कायव्वं ।
वसहे बारस वासा अट्ठारस भिक्खुणो मासा ॥ २०३ ॥

व्याख्या-यावज्जीव-प्राणधारणमर्यादा 'क्वचिद् रागादौ' इति सर्वत्र योज्यम् गुरो-आचार्यस्य, शुद्धाशुद्धेन-एषणीयानेषणीयेन [ मकारोऽलाक्षणिक', ], भवति, कर्तव्य-विधेय प्रतिजागरणमिति शेष । वृषभे-उपाध्याये द्वादश वर्षाणि-समा., अष्टादश मासा नवकौ, भिक्षो.-साधो, मासा' प्रतीता: । तत पर यदि भव्यो भवत तदो लष्टम्, न वेयत सबोध्यानशन कार्यते, न चेदिच्छा समस्ति तत शुद्धमेव दीयते न त्वशुद्धमिति सर्वज्ञमुद्रा । यदि तु दुर्विदग्ध एवं वदिष्यति-ज्रियते एव यदि आचार्यादिगुणयुक्तो भवति, ततोऽसौ व्यवहारगाथाभि मयोध्य —

पोक्खरिणी आयार आणयणा तेणगा य गीयत्थे ।
आयरियम्मि उ एए आहरणा हुंति नायव्वा ॥ १ ॥

सत्थपरिन्ना छक्काय-अहिगमो पिंडउत्तरज्झाए ।
रुक्खे य वसहे गावो जोहा सोही य पुक्खरिणी ॥ २ ॥

---

पुष्करिण्य आचार आनयन स्तेनकाश्च गीतार्थं ।
आचार्ये तु एते दृष्टान्ता भवन्ति ज्ञातव्या' ॥ १ ॥

शस्त्रपरिज्ञाषट्कायाधिगम पिण्डोत्तराध्ययने ।
वृक्षश्च वृषभगाव योधा शुद्धिश्च पुष्करिणी ॥ २ ॥

पुक्खरिणीओ पुव्विं जारिसियाओ न तारिसा इण्हिं ।
तहवि य पुक्खरिणी हवन्ति कज्जाइ कीरंति ॥ ३ ॥

आयारपकप्पे उ नवमे पुव्वंमि,आसि सोधी य ।
तत्तो च्चिय निज्जोढु इग्गाणिओ इण्हिं किं न भवे ॥ ४ ॥

तालुग्घाडणि-ओसावणाइविज्जाहिं तेणगा आसि ।
इण्हिं ताओ न संती तहावि, किं तेणगा,न खलु ॥ ५ ॥

पुव्विं चोदसपुव्वी एण्हिं जहन्नो पकप्पधारी उ ।
मज्झिमगकप्पधारी किं सो उ न होइ गीयत्थो ॥ ६ ॥

पुव्विं सत्थपरिन्ना अहीतपढियाइ हो उवट्ठवणा ।
एण्हिं,छज्जीवणिया किं सा उ न हो उवट्ठवणा ॥ ७ ॥

बीयंमि बंभचेरे पंचमउद्देस आमगंधंमि ।
सुत्तम्मि, पिंडकप्पी इण्हिं पिंडेसणाए उ ॥ ८ ॥

---

पुष्करिण्यः पूर्वं यादृश्यो न तादृश्य इदानीम् ।
तथापि च पुष्करिण्यो भवन्ति कार्याणि क्रियन्ते ॥ ३ ॥

आचारप्रकल्पश्च नवमे पूर्वे आसीत् शुद्धिश्च ।
तत एव निर्यूढ इहानीत इदानीं किं न भवेत् ॥ ४ ॥

तालोद्घाटन्यवस्वापिन्यादिविद्याभिः स्तेनका आसन् ।
इदानीं ताश्च न सन्ति तथापि किं स्तेनका न खलु ॥ ५ ॥

पूर्वं चतुर्दशपूर्वी इदानीं जघन्यः प्रकल्पधारी च ।
मध्यमक' कल्पधारी किं स तु न भवति गीतार्थः ॥ ६ ॥

पूर्वं शस्त्रपरिज्ञायामधीतपठितायामभूदुपस्थापना ।
इदानीं षड्जीवनिकाया किं सा न भवत्युपस्थापना ॥ ७ ॥

द्वितीये ब्रह्मचर्ये पञ्चमोद्देशे आमगन्धिनि ।
सूत्रे पिण्डकल्पी इह पुनः पिण्डैषणायां तु ॥ ८ ॥

आयारस्साउ उवरिं उत्तरज्झयणाओ आसि पुव्वि तु ।
दसवेयालिय उवरिं इयाणिं ते किं न होंती उ ॥ ९ ॥

मत्तगाइ तरुवर न सन्ति इण्हिं न हुंति किं रुक्खा ।
महजूहाहिवदप्पिये पुव्वि घसहा न पुण इण्हि ॥ १० ॥

पुव्व कोडिबद्धा जूहा विअ नंदगोवमाईण ।
इण्हि न संति ताइ किं जूहा ते न संती ओ ॥ ११ ॥

साहस्सी मल्ला खलु महपाणा पुव्वि आसि जोहा तु ।
तत्तुल्ला नत्थि पिंह किं ते जोहा न संती ओ ॥ १२ ॥

पुव्वि छम्मासेहिं परिहारेणं च आसी सोहीओ ।
सुद्धतवेण निव्वितियाइ इण्हि विसोही ओ ॥ १३ ॥

---

[ आचाराङ्गसूत्रस्य लोकविजयनाम्नि द्वितीये अध्ययने, ब्रह्मचर्याभिधाने पञ्चमोद्देशे आमगन्धिनि सूत्रे अधिते सति साधु पिण्डकल्पी भवति । इदानीं पुन दशवैकालिकसूत्रस्य पञ्चमपिण्डैषणाध्ययने अधीते मुनि पिण्डकल्पी भवति ]

आचारस्योपरि उत्तराध्ययनानि आसन् पूर्वं तु ।
दशवैकालिकस्योपरि इदानीं तानि किं न भवन्ति ॥ ९ ॥

मत्ताङ्गादितरुवरा न सन्ति इदानीं न भवन्ति किं वृक्षा ।
महायूथाधिपा दर्पिका पूर्वं वृषभा न पुनरिदानीम् ॥ १० ॥

पूर्वं कोटीबद्धा यूथा अपि च नन्दगोपादीनाम् ।
इदानीं न सन्ति ते किं यूथास्ते न भवन्ति ॥ ११ ॥

सहस्रमल्ला खलु महाप्राणा पूर्वमासन् योधा ।
तत्तुल्या न सन्तीदानीं किं ते योधा न सन्ति ॥ १२ ॥

पूर्वं षण्मासैः परिहारेण च आसीत् शुद्धिस्तु ।
शुद्धतपसा निर्विकृत्यादिना इदानीं विशोधिश्च ॥ १३ ॥

किं पुण एवं सोही जह पुव्विलासु पच्छिमासु य ।
पुक्खरिणीसुं वत्था इयाणि सुज्झंति तह सोही ॥ १४ ॥

एवं आयरिआइ चोद्सपुव्वाई आसि पुव्विं तु ।
इण्हि जुगाणुरूवा आयरिआ होंति नायव्वा ॥ १५ ॥

नीरोगावस्थायां तर्हि किमित्याह—

नीरोगाणवि तह देसकालमासज्ज होइ गहणे य ।
जम्हा निसीहगंथे पयडमिणं भणियमेयं तु ॥ २०४ ॥

व्याख्या—नीरोगाणामपि व्याधिरहितानां न केवल रोगिणामित्यर्थः, तथा अभ्युच्चये, देशकालमासाद्य—प्राप्य, ग्रहण स्वीकारोऽशुद्धाहारादेः, एवमित्थं तत्र देशः कंकड्डकादिः कालो दुर्भिक्षादिः, यस्मान्निशीथग्रन्थे प्रकट भणितमुक्तम्, एव वक्ष्यमाणनीत्या, तुः पूरणे इति गाथार्थ ॥

तदेवाह—

संथरणम्मि असुद्धं दोण्हं वि गिण्हतदितयाण हियं ।
आउरदिट्ठंतेणं तं चेव हियं असंथरणे ॥२०५॥

प्रकटार्थो, नवरं संस्तरणं तद्विपरीतमिति ॥

किंचेति सम्बन्धार्थः,

संविग्गभावियाणं लोद्धयदिट्ठन्तभावियाणं च ॥
मोत्तूण खित्तकाले भावं च कहंति सुद्धुञ्छं ॥ २०६ ॥

व्याख्या—संविग्नभावितानां गीतार्थवासितानां श्रावकाणामिति शेषः, तेषां हि प्राय इयं देशना—अशुद्धं न दातव्यमिति । लुब्धकदृष्टान्तभावितानां श्री-

---

किं पुनरेवं शुद्धिर्यथा पूर्वासु पश्चिमासु च ।
पुष्करिणीषु वस्त्राणीदानीं शुद्ध्यन्ति तथा शुद्धिः ॥ १४ ॥
एवमाचार्यादयश्चतुर्दशपूर्व्यादय आसन् पूर्वं तु ।
इदानीं योग्यानुरूपा आचार्या भवन्ति ज्ञातव्याः ॥ १५ ॥

तदेवाह—

निच्छयओ पुण अप्पे वि जस्स वत्थुंमि जायए भावो ॥
तत्तो सो निज्जरओ जिणगोयमसीहआहरण ॥ २१३ ॥

व्याख्या-निश्चयतो-निश्चयमतात्,पुनरल्पेऽपि-हीनेऽपि, न केवल लष्टे इत्यपि शब्दार्थः, वस्तुनि आचार्यादौ, यस्य भव्यस्य, वस्तुनि-उत्करूप, जायते प्रादुर्भवति, भावः प्रशस्ताऽन्तःकरणम्, ततः स इति भावो निर्ज्जरकः कर्म्मह्रासकारकः । जिनः गोतमः, सिंहः, आहरण दृष्टान्तः, इति गाथार्थः ॥भावार्थस्तु कथानकात् । तच्चेदं "किल भगवता वीरेण गौतमस्वामी ग्राम गच्छन्नेकदा भणितः-"गौतम ! त्वया हालिको मार्गं गच्छता प्रव्राजनीय ।" 'तथेति'प्रतिपद्य प्रणम्य च भगवन्त गतो गौतमो ग्रामे,दृष्टश्च गच्छता क्षेत्रनिकटवर्ती हालिक ।ततो गौतमेन भणित-'किं भो ! करोपि ?' निजकर्म्मोचित पुनरुवाच-सः-'साम्प्रत यच्च भणसि तदह भगवन् ! करोमि' । गौतमेनोचे 'धर्म्म कुरुष्व'इति । तेन च प्रोत्फुल्लवदनकमलेन भ्यगादि 'एवमिति' । ततः प्रव्राजितोऽसौ । ततः स्वकार्यं विहाय भगवत्सम्मुखमागच्छत-स्तस्य शिक्षा दत्ता 'एव चड्क्रमितव्यम्, एवंविधश्चास्मदीयो भगवान वीरो देवता प्रतिपत्तव्यः' इत्यादि, सर्व्वं तेन प्रतिपन्नम् यावद्यावि भगवान्नासीदृष्टः । दृष्टे च तस्मिन् रजोहरण मुक्त्वा 'यद्यय ते गुरुस्ततो न किञ्चिदनेन धर्म्मेण कार्यम्' इति भणित्वा च पलायित. । किल तस्य वासुदेवभवकृतपूर्व्ववैरात् त्रिपृष्ठभवहतजीवसिंह-पालनरूपात् भगवन्त पश्यन् कर्म्मबन्धः, गौतम च पश्यन. सद्भाव । गौतमश्च भगवदपेक्षया हीनः, छद्मस्थाऽतीर्थकरत्वादिहेतो , भगवाँश्चोत्तम' तीर्थकरत्वादि-हेतुभिरेव, इति सिद्ध हीनेऽपि शुभभावात् निश्चयनयेन लष्टत्वम् ॥

इत्थमपि यन्निन्दापयन्ति तत्किम् ? इत्याह—

लट्ठाणुट्ठाण सुदरेण भावेण चिट्ठिय ज तु ॥
निन्दावितयत्त नूण ताण रोसस्स दुल्ललिय ॥ २१४ ॥

व्याख्या-लष्टानुष्ठान प्रशस्तक्रिया, सुन्दरेण प्रधानेन, भावेन चित्तेन, चेष्टित विहित यदुपवासादिक, तु' पूरणे, निन्दापयन्ति-दुष्टमिति त्याजयन्ति ' श्रावका-

दीन्'इति शेषः, तन्नूनं निश्चित, तेषां निन्दाकारकाणां, रोषस्य, दुर्ललितं-विजृम्भितम्, इति गाथार्थः ॥

स्फुटत्वमेव भावयन्नाह—

उववासपोसहाई नेव को वि भावं विणा इह करेइ ॥
ता नो विहल सहल ताण समीवे वि ठियमेयं ॥ २१८ ॥

व्याख्या—उपवासपौषधादि समयप्रतीतम्, नैव, कोऽपि कश्चिद्, भाव विप्रोत्साहं, विना अन्तरेण, इह प्रवचने, करोति विदधाति धर्म्मार्थी श्राद्धादिरिति-शेषः । तस्मात्,नो नैव, विफलं-धर्म्मकार्यहीन, किन्तु-सफल फलवद्, तेषां पार्श्वस्थादीनां, समीपेऽपि निकटेऽपि, न केवलं सुयतिसमीपे इत्यपि शब्दार्थः, स्थितं प्रतिष्ठितमेतत्पदकरणम्, इति गाथार्थ ॥

व्यतिरेकमाह—

अह विहल, तो ते कत्थ सावया कुणंतु धम्मत्थी ॥
पुव्वुत्तजुत्तिओ ज ते वि हु जायंति पासत्था ॥ २१६ ।

व्याख्या—अथेति पराभिप्रायार्थः, विफल-फलरहित, तत', ते निर्दिष्टनामानः, कुत्र कस्मिन्, स्थाने इति शेषः, श्रावकाः–प्रतीताः, तमुपवासादिक, कुर्व्वन्तु विदधतु, धर्म्मार्थिनो ह्युपलम्पटाः, किमिति ? पूर्व्वोक्तयुक्तेः "सुत्तत्थपोरिसी नो करेइ " इत्यादिकायाः, यस्मात्, तेऽपि, एव वादिनः,–जायन्ते भवन्ति,पार्श्वस्थाः, उपलक्षणत्वादवसन्नादयश्च, इति गाथार्थ ॥

॥ दूषणान्तरमाह—

अहवेव वयतो हांतु सुदरा नियमईए ते साहू ॥
जइ पुव्वकयं सयमवि पुणोवि पकुणंति जोगाई ॥ २१७ ॥

व्याख्या—अथवेति प्रकारान्तर सूचनार्थः, एवं–पूर्व्वोक्तप्रकारेण, वदन्तो-ब्रुवाणा ,भवन्तु–सन्तु,सुन्दरा–भव्या, निजमत्या स्वाभिप्रायेण, ते एव वदनशीलाः, साधवो व्रतिनः,यदि पूर्व्वकृत शीतलविहारविहितं स्वयमप्यात्मना,पुनरपि-भूयः,

प्रकुर्वन्ते–विदधति, योगादिकं योगोद्वहनादिकम्, इति गाथार्थः ॥

तन्मतावलम्बिना निर्मूलता दर्शयन्नाह—

अहहो पिच्छसु अन्नाण–विलसियं सावयाण केसिं चि ॥
पच्चक्खविरुद्धे वि हु लग्गंती ताण वयणम्मि ॥ २१८ ॥

व्याख्या–'अहहो' इत्याश्चर्ये, प्रेक्षस्व–अवलोकय ' मध्यस्थजन ' इति शेषः, अज्ञानविलसितं–मूढतायेष्टितं, श्रावकाणां मनीषाणां, केषाञ्चिद् न सर्वेषाम्, प्रत्यक्षविरुद्धेऽपि अध्यक्षासहते, हु पूरणे, लगन्ति–अवलम्बन्ते, तेषां प्रत्यक्षविरुद्धवादिना, वचसि वचने । स्वयं निजतपोऽनुष्ठितं शीतलविहारित्वं न निन्दन्ति, अपितु निन्दापयन्तीति प्रत्यक्षविरुद्धमिति गाथार्थः ॥

इत्थं ज्ञाते जीवोपदेशमाह—

जत्थ व तत्थ य विहिय सोहणभावेण भव्वणुट्ठाणं ॥
मा निन्दावसु सड्ढे तवाइयं जीव उवएसो ॥ २१९ ॥

व्याख्या–यत्र वा तत्र वा पार्श्वस्थादिसमीपे, विहितं–कृतं, शोभनभावेन–मद्यस्तान्तःकरणेन, भव्यानुष्ठानं सत्क्रिया, 'मा' इति निषेधे, निन्दापय–त्याजय, श्रावकान् श्राद्धान्, तपआदिकम्.–उपवासपौषधादिकं, जीव ! आत्मन् ! उपदेशः शिक्षा, तव इति शेषः, इति गाथार्थः ॥

पार्श्वस्थादिसमीपे कृततपोनिन्दापनविचारस्त्रिंशत्तमोऽधिकारः ॥

एकत्रिंशत्तममाह—

सावयजणस्स धम्मस्स फमया के वि विंति चेइहरे ॥
पासत्थाईविहिए नो सक्काराइयं कुज्जा ॥ २२० ॥

व्याख्या–श्रावकजनस्य, धर्मस्य दानादेः, 'फमय'त्ति देशीभाषाया भ्रशकाः, केचन, ब्रुवते–भणन्ति, चैत्यगृहे–जिनसदने पार्श्वस्थावसन्नादिकृते, नो नैव, सत्कारादिकं वस्त्राऽऽभरण–पूजादिकं, कुर्याद् –विदध्याद्, इति गाथार्थः ॥

अन्यच्च ते एव यद्वदन्ति तत् सोत्तरं गाथया माह—

ते वि हु तट्ठाणाओ सइ सत्तीए निगासणिज्जाओ ॥
नेयं पि सुविहियाणं जुज्जइ वोत्तु जओ भणियं ॥ २२१ ॥

व्याख्या-तेऽपि पार्श्वस्थादयो, 'यैर्देवकुलानि कारितानि' इति शेषः, आशातनाकारित्वात्तेषामित्याशयः, हुः तथैव, ततः स्थानाद्-देवकुलादेः, सत्यां-विद्यमानायां, शक्त्यां-सामर्थ्ये,निष्कासनीया एव। न नैव,इदमपि पूर्वोक्तं, सुविहितानां साधूनां, युज्यते घटते, वक्तु भणितुम्, यतो भणितं-तदनन्तरगाथायां भणिष्यति, इति गाथार्थः ॥

तदेवार्थतो गाथापञ्चकेनाह—

×ववहारछेयगंथे ओसन्नविहारिणीए वइणीए ॥
कारवियं चेइहरं तत्थ य तप्पेरियजणेहिं ॥ २२२ ॥

विउले सक्कारम्मि सहिय वट्टंतयंमि गत्तो य ॥
विरहती तत्थ पवत्तिणीओ पत्ता तहिं सा ओ ॥ २२३ ॥

अब्भुज्जमित्ति भणिया अत्थि न वा कोइ एइ चेइहरं ॥
सुस्सूसयरो जंपइ नत्थिच्चिय भणइ गुरुणीओ ॥ २२४ ॥

उज्जंमिउ नो जुज्जइ अ विज्जमाणंमि तंमि तुह भद्दे ।
होइ अभत्ती जम्हा इय करणे चेइयाणंति ॥ २२५ ॥

---

+व्यवहारच्छेदग्रन्थे अवसन्नविहारिण्या व्रतिन्या ।
कारितं चैत्यगृहं तत्र च तत्प्रेरितजनैः ॥ २२२ ॥
विपुले सत्कारे साधिके च वर्तमाने अनघ ।
विहरन्त्यस्तत्र प्रव्रतिन्यः प्राप्तास्तत्र सा तु ॥ २२३ ॥
अभ्युद्यमे इति भणिता अस्ति नवा कोऽपि अत्र चैत्यगृहे ।
सुशुश्रूषापरः, जल्पति-नास्ति एव, भणन्ति गुर्व्यः ॥ २२४ ॥
उद्यन्तुं न युज्यते च विद्यमाने तस्मिन तव भद्रे ।
भवति अभक्तिर्यस्मात् एतत्करणे चैत्यानामिति ॥ २२५ ॥

अह पुण अविज्जमाणो (णे) सुस्सूसयरे उ उज्जमाविंति ।
तो पच्छित्त भणियं पयडं ववहारगंथम्मि ॥ २२६ ॥

सुगमा, तथा व्यवहार भणितं—

अणुसंद्व उज्जमींतिइ विज्जते चेइयाण सारवए ।
पडिवज्जंते विज्जन्तए गरुया अभत्तीए॥८॥ इति ॥

ननु तेषा तत्करणे पुण्य भवति वा न वा ? इत्याह—

होउ व मा होउ वत्ति य पुन्नं तक्कारयाण सम्मन्तू ।
जाणंति ते ववहारओ उ जम्हा इम वयणं ॥ २२७ ॥

सुबोधा ।

तदेवोक्तद्वयेनाह—

समयविपत्ती सव्वा आणावज्झत्ति भवफला चेव ॥
तित्थयरुद्देसेणवि न तत्तओ सा तदुद्देसा ॥ २२८ ॥

यथा छेदग्रन्थभणितम्—

दुब्भिगधमलस्साबी तणु रप्पे सण्हाणिया ।
उभओ वाउवहे चेव ते णहंति न चेइए ॥ २२९ ॥

सुगमम् ।

श्रावकाणां पुनस्तत्र किमित्याह—

सड्ढाण पुणो चेइहर तु जइ तए य होउ निप्पन्न ।
पइज्ज त फलय भयमेय आगमन्नूणं ॥ २३० ॥

---

१ अथ पुनरविद्यमाने शुश्रूषापरे तु उद्यमयन्ति ।
तत प्रायश्चित भणित प्रकट व्यवहारग्रन्थे ॥ २२६ ॥

२ अनुशास्यौ उद्यमयन्ति विद्यमाने चैत्याना सारके ।
प्रतिपद्यमाने विद्यमाने गुरव अभक्त्या ॥ ८ ॥

व्याख्या-श्रावकाणा-श्राद्धानां, पुनः, चैत्यगृहं-जिनसदनं, तुः पूरणे, यथा तथा वा-पार्श्वस्थादिकृतं श्रावकादिकृतं वा, भवतु, निष्पन्नं-तन्निष्पन्नं गतं, पूज्यमानमर्च्यमानं, फलदमीप्सितकारि, मतमेतत् सम्मतम्, इदं, आगमज्ञानां-सिद्धान्तविदाम्, इति गाथार्थः ॥

इति विदिते आत्मनः शिक्षामाह—

रे जीव ! जीववच्छल्ल-कारओ तं सि जइ फुडं ता मा ।
वारेसु सावयजणे इय पूयंते उ चेइहरे ॥ २३१ ॥

व्याख्या-रे जीव !-भो आत्मन् ! जीववात्सल्यकारको-भव्यप्राण्युपकारकर्ता, त्वमसि-भवसि, यदि, स्फुटं प्रकटं, ततो, ' मा ' इति निषेधे, वारय निषेधय, श्रावकजनान् श्राद्धलोकान्, इत्येवं, पूजयतो-अर्चयमानान्, तुः पूर्ववत्, चैत्यगृहान् जिनमन्दिरान्, इति गाथार्थः ॥

पार्श्वस्थकृतजिनभवने पूजाविचार एकत्रिंशत्तमोऽधिकारः ।

द्वात्रिंशमाह—

जो जहवायं न कुणइ इच्चाइ निदंसिऊण अन्नेत्थ ।
सम्मत्तस्साभाव वयंति भाहूण सव्वाणं ॥ २३२ ॥

व्याख्या-यो यत्यादि , यथावाद-यथोक्तं, न करोति-न विदधाति, [ इत्यादि ] निदर्श्य-कथयित्वा, आदिग्रहणात् " मिच्छद्दिट्ठी तओ हु को अन्नो ? वड्ढेइ य मिच्छत्तं परस्स संकं जणेमाणो " इति दृश्य सुबोधं च । अन्ये अपरे, अत्र-विचारप्रक्रमे, सम्यक्त्वस्य-दर्शनस्य, अभावमसत्ता, वदन्ति- भणन्ति, साधूनां, सर्वथा निश्शेषाणाम्, इति गाथार्थः ॥

अत्रोत्तरमाह—

एगंतेण नेव जम्हा ववहार-निच्छयनयेहिं ।
सव्वपि जिणमयं खलु निद्दिट्ठं समयकेऊहिं ॥ २३३ ॥

व्याख्या—एकान्तेन -निश्चयेन, नैवं-नेत्यम्, यस्मात्, व्यवहारनिश्चया

भ्या -प्रतीगम्या, सर्वमपि निःशेष जिनमत-सर्व्वज्ञागमः खलु निश्चये, निर्दिष्ट कथित, समयकेतुभि –जिनागमोद्योतकै , इति गाथार्थः ॥

व्यतिरेकमाह—

जइ पुण नेवं नेय होज्जा, तो कह णु सबलचारित्ती ।
इगवीसट्ठाणेसु भणिओ एवं दसाईसु ॥ २३४ ॥

व्याख्या-यदि पुनर्नैव- नयविचारं विना, ज्ञेयमवगन्तव्य, भवेत्, तत' कथ कन प्रकारेण, 'नु' इति वितर्के, शबलचारित्री कर्बुरशील , एकविंशतिसंख्या नेषु-इति सख्यानियमितेषु, भणित.-उक्त, एव वक्ष्यमाणनीत्या, दशाश्रुतस्कन्धावश्यकादिषु, इति गाथार्थः ॥

तान्येवार्थतः माह—

आउट्टियाए पाणाइ–वायकत्ता तहा उ भुजतो ।
आहाकम्म कंदाइय च एमाइ इगवीस ॥ २३५ ॥

व्याख्या–आकुट्टिकया–जानन् अनापदि यत् सेवते ।तथाचोक्त दशाश्रुतस्कन्धचूर्ण्याम्–" आउट्टिया नाम जाणतो अणावइए ज सेवइ"त्ति, प्राणातिपातकर्ता–जीवघातविधाता, तथाऽपरं, भुञ्जानो–अभ्यवहरन्, आधाकर्म–प्रतीत, मूलादिक च–मूलफलादिक, एवमादि–इत्थं प्रभृति, एकविंशतिसंख्यानि ' शबलस्थानानि, इति शेष' ।

तथा भगवत्या पुलाक-बकुश-प्रतिसेवनाकुशीलाना मूलोत्तरगुणसेविना चारित्र भणितम् । यद्यपि बकुशस्योत्तरगुणसेवित्व तत्र भणित, तथाप्युत्तराध्ययनचूर्णौ तस्यापि मूलगुणसेवित भणितमास्ते, न च वेलानियम. कृतः, इति गाथार्थः॥

अस्यैव भावार्थमाह—

नाणे सइ चारित्त, नाण पुण होइ सम्मदिट्ठिस्स ।
तो नज्जइ समत्त जहवायमकुव्वउ वि भवे ॥ २३६ ॥

व्याख्या–ज्ञाने–बोधरूपे, सति विद्यमाने, चारित्र–शीलम्, ज्ञानं, पुन-

रुक्तरूपं, भवति जायते, सम्यग्दृष्टेर्दर्शनवतः, ततो, ज्ञायते--बुध्यते, सम्यक्त्वमुक्तरूप, यथावाद्प्रतिज्ञारूप, अकुर्वतोऽपि अविदधतोऽपि, न केवलं कुर्वत इत्यपिशब्दार्थः, भयेज्ञायेन, इति गाथार्थः ॥

अभ्युच्चयार्थमाह—

तह मिरिइ-नंदिसेणा ताण मया मिच्छदिट्ठिणो होंति ।
मोत्तूण तो त्तिभूमी एमाइ जिणाणभंगाओ ॥ २३७ ॥

व्याख्या-तथा-अपर दूषणम, मरीचिनन्दिषेणौ-प्रतीतौ, तेषामेवंवादिना, मताद्-बोधात्, मिथ्यादृष्टी,भवतो-जायेते। कस्मात्? मुक्त्वा परिहृत्य यदि प्रव्रज्या कर्त्तु न शक्नोतीति शेषः, ततः, त्रिभूमिः प्रतीता, एवमादि जिनाज्ञाभङ्गात्-सर्वज्ञशासनलोपाद् वकारश्चात्र प्राकृतलक्षणेन लुप्तः, आदिशब्दात् " मुसावगस्स व रवराग० " इति गाथार्थः ॥

ननु तौ मिथ्यादृष्टी भविष्यतः, इत्याह—

सम्मत्त पुण ताण समयम्मि य देसियं तओ मुणह ।
सव्वत्थ नयमएणं सुत्ताण होइ वक्खाणं ॥ २३८ ॥

व्याख्या-सम्यक्त्व दर्शनं, पुनस्तयोर्मरीचि-नन्दिषेणयोः समये सिद्धान्ते, देशित कथित, ततस्तस्मात, मुणत-जानीत, सर्वत्र सर्वस्मिन्, नयमतेन च नयाभिप्रायेण, सूत्राणा-आगमवचसां, भवति-जायते, व्याख्यान-विवरणम, तथाह्यावश्यके—

" दसणपक्खो-सावय-चरित्तभट्ठे य मदधम्मस्स " । अस्य गाथार्द्धस्य तच्चूर्णौ व्याख्यानम् " सावउ न सक्केइ विसयगिद्धो पव्वइउ, सो भणइ-दंसण पि ता मे होउ'त्ति, तस्स एस पक्खो, चरित्तभट्ठे वा, एवं चेव मदधम्मे वा । जो गहियं गहीय भंजइ, " तथा आचाराङ्गे-" से बेमि समणुन्नस्स वा असमणुन्नस्स वा खाइम साइमं वा वत्थ वा पडिग्गह वा कबलं वा पायपुंछणं वा नो पाएज्जा, नो निमंतेज्जा, नो कुज्जा वेयावडियं, पर आढायमाणोत्तिबेमि ॥ " तत्र प्रथमपदस्य व्याख्या-समनोज्ञा दृष्टितो लिङ्गतश्च, न त्वाहारादिभिः पार्श्वस्थादयः,

असमनोज्ञास्तु शाक्यादयः । अस्य सूत्रस्य संवादो निशीथचूर्ण्यां तद्भाष्ये च बहुषु स्थानेषु विद्यते- सम्यक्त्वादीनि पार्श्वस्थादीनि विद्यन्ते इत्यर्थः । स तु ग्रन्थविस्तरभयान्न लिखितम् । तस्मादत्र नयैरेवोत्तरम्, न च " नया न विद्यन्ते इति वक्तव्य, चतुर्थव्याख्याङ्गत्वान्नयानाम् । तथा चोक्तम्-उपक्रमो निक्षेपोऽनुगमो नया ' इति । परमिति श्रुत्वा न मुमुक्षुणा चारित्रे मति मन्दआदर कार्यं , चारित्र विना ज्ञानदर्शनयोर्मोक्ष प्रत्यनङ्गत्वात्, इति गाथार्थं ॥

नयाभिप्रायमेव विशेषत. आह—

किंची उस्सग्गसुयं ववायसुयं च किंचि किंचेत्थ ।
उभयसुयं पुण किंचो मुज्झती तेण मदमई ॥ २३० ॥

व्याख्या-किञ्चिद्-उत्सर्गश्रुत-सूत्र वा, अपवादश्रुत च किञ्चित्, किञ्चाभ्युच्चये, अत्र-जिनप्रवचने, उभयश्रुतमुत्सर्गापवादरूप, पुन॰, किञ्चिदेरूप, मुह्यन्ते-सन्दिह्यन्ते, तेन कारणेन, मन्दमतय स्वल्पधिषणा । एषा च स्वरूपं नीनीथादवसेयम, इति गाथार्थ. ॥

अपर च सन्देहकारणमाह—

तह समयविऊ वयणं वयंति वयणाई बहुपयाराइं ।
निंदाथुइभेएणं हवंति तो जीव ! मा मुज्झ ॥ २४० ॥

व्याख्या-तथा पर, समयविद सिद्धान्तज्ञा॰, वचन-वाक्य, वदन्ति जल्पन्ति, वचनानि-सिद्धान्तवाक्यानि, बहुप्रकाराणि-नानाभेदानि, निन्दास्तुतिभेदेन उपलक्षणत्वादुभयवचनादीनि, भवन्ति-जायन्ते, ततो जीव ! आत्मन् ! मा निषेधे, मुह्य-सन्देह कुरु । इति गाथार्थ॰ ।

तान्येव विवृण्वन् निन्दावचन तावद्विवरीतुमाह—

सोया ते जियलोए इमाए गाहाए निंदिओ नाणी ।
नाणगुणाभावाउ नउ सो अन्नाणिणो हीणो ॥ २४१ ॥

व्याख्या-शोच्यास्ते जीवलोकेऽस्या गाथायां, शेष तु-" जिणवयण, ने

नरा न याणंति, सोचाणवि ते सोचा, जे नाऊणं वि न करिंति." इति दृश्य सुबोधम्। निन्दितो हीलितो ज्ञानी-सूत्रवान्, ज्ञानगुणाभावात्-विरतिलक्षणगुणाभावात्, न पुनर्नैव, स ज्ञानी, अज्ञानिनः-श्रुतविकलात् सकाशात्, हीनस्तुच्छः, इति गाथार्थः ॥

किमित्याह—

नाणगुणो जे अहिओ अन्नाणिणो नत्थि सो उ तो हीणो ।
एव ठियंमि नज्जइ निन्दावयणं फुडं चेय ॥ २४२ ॥

व्याख्या-ज्ञानगुणो यस्मादधिकोऽर्गल', अज्ञानिन -श्रुतविकलस्य, नास्ति-न विद्यते, स ज्ञानगुणः, तुः पूरणे, ततो, हीनः तुच्छो, ज्ञानिनोऽज्ञानी। एवं स्थिते इत्थं सति, ज्ञायते बुध्यते, निन्दावचन हीलावाक्यं, स्फुटं प्रकटमेतत्-' मोक्षा ते जियलोए ' इत्यादिकम्, एवं ज्ञानी निन्द्यते-येन उद्यमं न करोति, न पुनरज्ञानिन' स हीन', इति गाथार्थ. ॥

स्तुतिवाक्यविवरणमाह—

' एक्को वि नमुक्कारो ' इच्चाइयं तु होइ थुइवयणं ।
नहि एग नमोक्कारो संसारुत्तारण होइ ॥ २४३ ॥

व्याख्या-' एकोऽपि नमस्कार' ' इत्यादिक तु भवति स्तुतिवचन-स्तवनवाक्यम्, आदिशब्दात् " जिणवरवसहस्स वद्धमाणस्स, ससारसागराओ तारेइ नरं व नारिं वा " इति दृश्यम्, नहि-नैवैकनमस्कारात् प्रसिद्धात् ससारोत्तरण, भवति-जायते, इति गाथार्थः ॥

पराभिप्रायमाशङ्कयाह—

अह सेसावस्सयसज्जुयस्स सहलो कहं नु तो एगो ।
अह एगो चिय साहइ तो किं सेसकिरियाए ॥ २४४ ॥

व्याख्या-अथ पराभिप्रायार्थः, शेषावश्यकसंयुतस्य-समस्तानुष्ठानपरायणस्य, सफल.-स्वकार्यकृत्. कथ-केन प्रकारेण, 'नु' इति वितर्के, ततो एकः,

अद्वितीय', अथ एक एव साधयति निष्पादयति 'मोक्षं' इति शेष', तथ' किमिति प्रश्ने, न तु शेषक्रियया नमस्कार-व्यतिरिक्तानुष्ठानेन, एकनमस्कारेणैव मोक्षस्य सिद्धत्वाद् इति गाथार्थः ॥

न केवलं नमस्कारस्येद माहात्म्य, किन्त्वपरधामपीत्याह—

सव्वे वि य सुहजोगा फलया कम्मक्खयत्थ कीरता ।
अविसेसेवि विसेसो नज्जइ थुइवयणमेव तु ॥ २४५ ॥

व्याख्या-सर्वेऽपि समस्ता., न कवलं नमस्कार इत्यपि शब्दार्थ , शुभ-योगाः-प्रशस्तव्यापारा', फलदा-मोक्षसाधका , कर्मक्षयार्थं पापापोहनिमित्त, क्रियमाणा विधीयमाना', अविशेषेऽपि ' विशेषो नमस्कारो मोक्षदः इति ज्ञायते-बुध्यते, स्तुतिवचन -स्तववाक्यम्, एव इत्थ, तवस्तस्माद् " इति गाथार्थ. ॥

ननु किं नमस्कारा मोक्षो न भवति ? इत्यस्योत्तरगर्भ जीवोपदेशमाह -

पारपरेण एगो वि होज्ज ससारतारओ सो उ ।
एव ठियमि रे जीव ! सुणसु जं थिंति समयन्नू ॥ २४६ ॥

व्याख्या--पारपरेण-परपरया, एकोऽपि भवेत्, ससारतारक', स,-नम स्कार', तु' पूरणे, एव स्थिते इत्थ प्रतिष्ठिते, क्षतिवाक्ये, रे जीव ! भो प्राणिन् ! शृण- जानीहि, यद्ब्रुवते समयज्ञा -सिद्धान्तविद , एव भयवान्वयादीन्यपि बहु-श्रुतसेवातोऽवगन्तव्यानि, इति गाथार्थ ॥

यो यथावाद न करोति स मिथ्यादृष्टि' इत्यादि वर्णनात् प्रायि-शोऽधिकार ॥

अतस्तत्पक्षिणमाह—

वेसो वि अप्पमाण इच्चाइं दसिऊण वारिंति ।
सव्व पि हु करणीय इह लिगुवजीविणो बहुणो ॥ २४७ ॥

व्याख्या--'वेसोप्यप्रमाणम्'-इत्यादि निदर्श्य-कथयित्वा, आदिग्रहणाद् "स-जमपएसु वट्टमाणस्स, किं परियत्तियवेस विस न मारेइ खज्ज'त " इति दृश्य, वारयन्ति-निषेधयन्ति, सर्वमपि-समस्तमपि, करणीयं कर्त्तव्यम, इह समये,

लिङ्गोपजीविनो–गुणशून्यस्य प्रतिनः साधोः, इति गाथार्थः ॥

उत्तरमाह—

> तत्थवि एय बुज्झसु त पइ अप्पमाणमेव सो वेसो ।
> जो निस्सक वट्टइ असुहट्ठाणेसु तेण जुओ ॥ २४८ ॥

व्याख्या–तत्रापि–वेषनिराकरणे, बुध्यस्व–जानीहि, तं प्रति–तमाश्रित्य, अ-प्रमाणमेव–निष्फल, स वेषो–रजोहरणादिः, योऽनिर्दिष्टनामा, निःशङ्कं नि-रपेक्षं, वर्तते, अशुभस्थानेषु साध्वयोग्येषु, तेन वेषेण, युत' सहितः, इति गाथार्थः॥

एतदेव भावयन्नाह—

> दुग्गइगईए गच्छतयस्स न हु तस्स तेण माहारो ।
> ववहारा अन्नेसिं तस्सवि लिंगं पमाणं तु ॥ २४९ ॥

व्याख्या–दुर्गतिगत्या–नरकादिकायां, गच्छतो–व्रजतः, न च, हुरवधारणे, तेन वेषण, तस्य लिङ्गोपजीविनः, मायार परित्राणम्, व्यवहारात् व्यवहारनयम-तेन, ( अन्येषा ) तस्यापि–लिङ्गोपजीविनोपि, लिङ्ग वेषः, प्रमाणमेव, तुरवधा-रणे, इति गाथार्थः ॥

व्यतिरेकमाह—

> जइ न पमाण तो कर णु कप्पगथंमि एरिस वुत्तं ।
> सुविहियजईण इयर पडुच्च एयाए गाहाए ॥ २५० ॥

व्याख्या–यदि, नेति निषेधे, प्रमाण लिङ्गमिति शेष', तत., कथ, ' नु ' इति वितर्के, कल्पग्रन्थे–प्रतीते, ईदृग्–वक्ष्यमाणम्. उक्त भणितं, सुविहितयतीनां प्रधानसाधूनाम्, इतर लिङ्गोपजीविनं, प्रतीत्याश्रित्य, उपलक्षणत्वाद्विशिष्ट चे-त्यपि द्रष्टव्यम्, एतद्गाथया, इत्यर्थ ॥

तमेवाह—

> लिंगत्थस्स उ वज्जो त परिहरओ व भुजओ वावि ।
> जुत्तस्स अजुत्तस्स य रसावणो एत्थ दिट्ठंतो ॥ २५१ ॥

व्याख्या–लिङ्गस्थस्य–रजोहरणादियुत , तुरवधारणे, स च व्यवहितो योज्यः, स चैवम्–वर्ज्य एव–परिहरणीय आधाकर्म्माद्याहार शय्यातरः, तदाधाकर्म्मादिकं, तस्य स्वयं परिहरतो–वर्जयत , भुञ्जानस्य–आसेवत , वापीति समुच्चये, युक्तस्य वाऽयुक्तस्य वा वक्ष्यमाणनीत्या, वा समुच्चये, रमापण –कल्पपालह ट्ट , अत्र दृष्टान्त –दृष्टोदाहरणम । यथा हि–कस्मिंश्चिद्देशे कल्पपालहट्टस्योपरि ध्वज क्रियते, ततस्त दृष्ट्वा दूरेणैव ब्राह्मणादयस्त वर्जयन्ति, एवमत्रापि रजोहरणादि ध्वजतुल्ययोज्यम, इति गाथार्थः ॥

तामेव गाथा किञ्चिद्व्याख्यातुकाम आह–

वक्खाण एईए तत्थ उ जुत्तस्स सजमगुणेहिं ।
अजुयस्स उ तेहिं चिय इय लिगुयजीविणो भणिय ॥ २५२ ॥

व्याख्या–व्याख्यान–विवरणम् एतस्या –पूर्वोक्तगाथाया , तत्र पुन कल्पग्रन्थे, युक्तस्य–सहितस्य सयमगुणै –क्षान्त्यादिभि , अयुक्तस्य असहितस्य तुः पूरणे तैरत्र क्षान्त्यादिभि , इति–इत्थ, लिङ्गोपजीविन साधुवेषधारकस्य, भणितमुक्तम, इति गाथार्थ ॥

व्यतिरेकमाह–

जइ लिगमप्पमाण न विज्ज तो तस्स अविरयस्सेव ।
सिज्जायरम्मि चिता आहाकम्मेव का जइणो ॥ २५३ ॥

व्याख्या–यदि, लिङ्ग वेष , अप्रमाण–अकारण, भवेद्–भावेन, तत , तस्य–लिङ्गोपजीविनो,अविरतस्येव मिथ्यादृष्टेरिव, शय्यातरे–वसतिदातरि, आधाकर्म्मणि वा–प्रतीते, वा समुच्चये, चिन्ता–तद्वक्तव्यरूपा, का ? न काचित् यते साधो', इति गाथार्थ ॥

इति स्थिते जीवोपदेशमाह–

तम्हा जह देससु रे जिय ! धम्मत्थमप्पणो जह ।
सव्वाण सुत्ताण विसयविभागो हु दुन्नेओ ॥ २५४ ॥

व्याख्या–तस्मादेव- पूर्वोक्तक्रमेण, दिश कथय, रे जीव !-भो प्राणिन् ! ध

र्मार्थं नृपनिमित्तम्, आत्मनः- स्वस्य, एवमुक्तवत, सर्वेषां--समस्तानां, सूत्राणां, विषयविभागो यथावस्थितरूपो, दुःखोन्नेयः कृच्छ्रबोद्धव्यः, इति गाथार्थः ॥

वेषोऽप्रमाणमिति कथनविचारस्त्रयस्त्रिंशोऽधिकारः

इदानीं चतुस्त्रिंशमाह—

सुहिएसु य एमाइँ वयणेसु असंजयाउ चितन्ने ।
पासत्थाई न नो जम्हेयं विति समयन्नू ॥ २५५ ॥

व्याख्या—" सुखितेषु च–सातवत्सु, " एवमादिवचनेषु–इत्थं प्रभृतिभणितेषु, आदिग्रहणाद्–"दुहिएसु य जा मे असंजएसु अणुकंपा। रागेण व दोसेण व त निंदे त च गरिहामि ॥ " तथा "अस्संजयाण पूया दस वि अणंतेण कालेण " इत्यादि च इत्य ब्रुवेर्थ च, असय[*तास्तु ब्रुवते पार्श्वस्थादय. न] त्किमेषां दत्तेनेति। तत्परोक्त, नेति निषेधे,यस्माद्, एवमित्थं, ब्रुवते–गदन्ति,समयज्ञाः–आगम वेत्तार, इति गाथार्थ. ॥

तदेवाह—

अस्संजयाण परतित्थियाण कविलाईयाण रागेण ।
सयणिज्जो वा अम्ह अम्हव्वयदेसिओ व इमे ॥ २५६ ॥

एयस्सिमिणा दत्तेण होइ एयस्स चित्तसन्तावो ।
दोसेणेव दाण तेसिं चिय जाणिम अत्थं ॥ २५७ ॥

व्याख्या–असयतानामिति कोर्थः ? परतीर्थिकाणाम्, तानेव नामत आह–कपिलादीनां–साङ्ख्यब्राह्मणादीनाम्, रागेण–स्नेहेन, एतदेव भावयन्नाह–स्वजनो बन्धुरस्माकम्, 'अम्हवयदेसिओव'त्ति देशीभाषया अस्मत्सदेशका., वा शब्दः समुच्चयार्थं ,अय शाक्यादिः, एव मत्या यद्दान तद्रागतो दान भण्यते । द्वेषत आह–एतस्य- विवक्षितस्य शाक्यादेः अनेन अशनादिना दत्तेन–वितीर्णेन, भवति–जायते,

---

*कोष्टका तर्गतपाठो द्वयोरपि पुस्तकयोस्त्रुटित यत्र भाति १-सदेशक ष

एतस्य-मद्दृष्टिशाक्यादेश्चित्तसंतापो-मात्सर्येद , द्वेषेण-मत्सरेण, एयम्-इत्थं, दान वितरण, 'भवति' इति क्रियाध्याहार , तयोरपि-रागद्वेषस्थानयो., जाणीहि-अव गच्छ, अमु-निर्दिष्टम्, अर्थमभिधेयम्, इति गाथार्थ ॥

पराभिप्रायमाशङ्क्याह—

संजयविवक्खभूया पासत्थाई असंजया एत्थ ।
भन्नंती नोअन्ने, अह त नो, जेण सुत्तमिण ॥ २५८ ॥

व्याख्या-संयतविपक्षभूता-प्रतिपक्षसदृशा , पार्श्वस्थाद्य -प्रतीता, असंय ता-असंयतशब्दवाच्या , अत्र पूर्वोक्तवाक्येषु, भण्यन्ते,-प्रोच्यन्ते, नो-नैव अन्ये-शाक्यादय' अथ पराभिप्रायार्थ । तत्परोक्त, नेति निषेधे, यस्मात्सूत्र-सिद्धान्तवच नमिद वक्ष्यमाणम् इति गाथार्थः ॥

तदेवाधेत. आह—

जीवेण असंजय-अविरयएमाइगुणजुओ भंते ! ।
अण्हाइ पावकम्म हता अण्हाइ पडिवयण ॥ २५९ ॥

व्याख्या-जीवः-प्राणी, 'णं' इत्यलङ्कारे, असयत' संयमाभावात्, अविरतः प्रत्याख्यानाभावात्, एवमादिगुणयुक्त'-इत्थं प्रभृतिगुणसहित , 'भदन्त' इति श्रीवीरामन्त्रणे, 'अण्हाइ'त्ति-आश्रवति, पापकर्म-ज्ञानावरणादि, ? 'हंता' इति गौतमामंत्रणे, 'अण्हाइ'त्ति 'आश्रवति पापकर्म' इति प्रतिवचन-मुत्तरम्। तथा च भगवन्तं प्रति गौतमो भगवत्पादान्तिकमाह-"जीवेणं भंते असंजए अविरए अपडिहयपच्चक्खायपावकम्मे पाव कम्म अण्हाइ ? हन्ता गो-यमा ! जीवेणमित्यादि तदेव वाच्यमुत्तरम्, अत. स्थितमिह सामान्येनासंयतो जीवो भण्यते इति गाथार्थ. ।

व्यतिरेक सपादया गाथया आह—

जइ पुण पासत्थाई असंजया एत्थ होंति विन्नेया ।
तो कह सम्मत्तस्स उ एस गुणो होज्ज सड्ढाणं ॥ २६० ॥

दुक्खियजीवणुकंपा.

व्याख्या-यदि, पुन , पार्श्वस्थादय , असंयता, अत्र-विचारे, भवन्ति, विज्ञेया, सत , कथं, सम्यक्त्वस्य, तुः पूरणे, एष-वक्ष्यमाणो, गुणो-निर्म्मलता, भवेद्-जायेत, श्राद्धाना श्रावकाणाम । किं लक्षणः ? इत्याह-(दुःखितजीवानुकम्पा) श्रावकेण हि दुःखितजीवानामुपरि अनुकम्पा-दया विधेया, सा कथं घटते ? यत्तसौ तां निन्दति, इति सपादगाथार्थः ॥

एवञ्च पराभिप्रायमभ्युपगम्योक्त 'पार्श्वस्थादयो दु खिता ' इति, परमार्थं तस्तु दु खिता एते न भवन्तीति द्वितीय पदमाह—

नय दुक्खी एए किंतु अधाइं ।

व्याख्या-नच-नैव, दु'खिता' पीडिता', एते-पार्श्वस्थादय , किन्तु प्रत्युतस्वान्ये, अन्धादयः चक्षुर्विकलकाणकुण्टादय एव दु खिनः, इति पदार्थः ॥

अभ्युच्चयार्थमुत्तरार्द्धमाह—

किंच निसीहे भणिया विरया तह सजया एए ॥ २६१ ॥

व्याख्या-किञ्च-अपर, निशीथे-शास्त्रशिरोमणौ भणिता-गदिता' । विरता संयताश्च, एते-पार्श्वस्थादय', इत्युत्तरार्द्धार्थ ॥

तदेवार्थतः प्राह—

विरया पासत्थाई इयरे पुण मिच्छदिट्ठिणो होन्ति ।
विरयाविरया सड्ढा इय सजयमाइणो वि भवे ॥ २६२ ॥

व्याख्या-विरता पार्श्वस्थादय', इतरे अविरता मिथ्यादृष्टयो, भवन्ति, विरताऽविरता' श्राद्धा', इति संयतादयोऽपि भवेयुः, मकारोऽलाक्षणिक' तथाहि-संयताः, पार्श्वस्थादय.. असंयता मिथ्यादृष्टयः, संयतासंयतास्तु श्रावका', इति ॥

तथा चोक्त निशीथभाष्ये—

विरए य अविरए वा विरयाविरए य तिविहते इत्थं ।

जं जं जुजइ जोग तट्ठाणपसधण कुणइ ॥ १ ॥

व्याख्या–"पामत्थाईया विरया, अविरयसद्दो मिच्छादिट्ठी वा अविरओ, गिहीवाणुव्वओ विरयाविरओ. निन्हि, विगिच्छंठो पय दइ" इत्यादि । तथा तत्रैव मार्गगमनाधिकार–" असजयलिंगीहिं उ पुरिसाणिंइपहएहि य दिवाइ" प्रथमपदस्य तच्चूर्णिव्याख्या–"असजया गिही अन्नलिंगी वा" लिङ्गमेषा वियते इति लिङ्गिनोऽन्यपाखण्डिन, इत्यर्थ । तस्मादन्वयव्यतिरेकोक्तत्वात्, स्वमतऽसयत॥ अत्र परोक्तसूत्रस्थानेन भण्यत, इति गाथार्थ ॥

एव विदिते सूत्रे जीवोपदेशमाह—

सुदरतर खु भणिय सव्व समभोदहिंमि र जीव ।।
मदमइगोयरगय दुन्नेय होइ किं बहुणा ॥ २६३ ॥

व्याख्या–सुन्दरतर–प्रधानतम, खुवांक्याळङ्कारो, भणितं–उक्तं सर्वं, समयोदधौ–सिद्धान्तजलधौ, रे जीव ! भो आत्मन् ! मन्दमतिगोचरगतं स्वल्पबुद्धि-विषयीभूत, दुर्ज्ञेय दुर्बोध, भवति जायत, किमिति प्रश्ननिर्वचनार्थं, बहुना प्रभूतेन भणितेन इति शेष, इति गाथार्थ ॥

पुनर्जीवोपदेशमाह—

तह देसमु ससमु तह तह ॥ कुणसु सव्वणुट्ठाण ।
जह समयन्नू जप्पति न उण समईए उवएसो ॥ २६४ ॥

व्याख्या–तथा–तेन प्रकारेण, दिश–कथय धर्मम, तथा शस–श्लाघय 'भव्य-मिदमनुष्ठान' इति, तथा–त्व कुरु–विधेहि, सर्वं समस्तमनुष्ठान–क्रियाम अनुस्वारोऽत्र लुप्तो द्रष्टव्य, यथा–येन प्रकारेण समयज्ञा सिद्धान्तविदो जल्पन्ति–गदन्ति, न पुनर्नैव स्वमत्या निजधिषणया, यत उक्तम्—

" अपरिच्छियसुयनिहसस्स केवलमभिन्नसुत्तचारिस्स । सव्वुज्जमेण विकय अन्नाणतवे बहु पडइ ॥" इत्यादि उपदेश शिक्षा तवेय 'जीव' इति शेष, इति गाथार्थ. ॥

---

१–ट्ठाणससेधण ख  २–च्छा ट्ठापय म ।  ३ य हि या ।  ४ प

असयतशब्दविचारश्चतुस्त्रिंशोऽयमधिकारः ॥

इदानीं पञ्चत्रिंशमाह—

केइ सकज्जावेक्खा निरविक्खा अन्नअंतरायस्स ।
अन्नहठिअंपि सुत्तं ममईए अन्नहा काउ ॥ २६५ ॥

वारेन्ति मुद्धसावय–जणे उ दिंते असुद्धमन्नाई ।
काऊण पाणिवहं इच्चाइ उल्लवेऊण ॥ २६६ ॥

व्याख्या–केपि–एके,स्वकार्यापेक्षा–आत्मप्रयोजनसस्पृहाः, निरपेक्षा–निस्पृहाः, अन्यान्तरायस्य अपरविघ्नस्य, अन्यथाप्रकारेण स्थितमपि, सत्सूत्र–प्रकरणवचन स्वमत्या-निजधिषणया,अन्यथा विपरीत,कृत्वा–विधाय,वारयन्ति–निषेधयन्ति,मुग्ध-श्रावकजनान्, तु' पूरणे, ददतो यच्छतः, अशुद्ध आधाकर्मादि, । तदेवाह–अन्ना दि–पानप्रभृति, कृत्वा विधाय, प्राणिवधं जीवहिंसाम्, इत्यादि–एवं प्रभृति, उल्ल-प्य–कथयित्वा, आदिग्रहणाद् "दाणं जो देइ धम्मसद्धाए, दाहिऊण चंदण सो करइ इंगालवाणिज्ज"इति द्रष्टव्यम् । पराभिप्रायोऽयमस्य–यः किलैकेन्द्रियानुप मर्द्यं साधुभ्यो यच्छनस्तस्य बहुच्छेदश्चन्दनदाहतुल्याः, लाभश्च स्तोकोऽङ्गारमूल्यः, सदृश इति गाथार्थः ।

एतन्निराकरणार्थं गाथाद्वयमाह—

वक्खाणाओ विसेसो नज्जइ सव्वाणमेत्थ सुत्ताणं ।
अविरोहा समयन्नू भणंति एयस्सिमो अत्थो ॥ २६७ ॥

बेइंदियाइपाणे हणिऊणं एत्थ देइ जो दाणं ।
परसमये तस्सेयं चंदणइंगालुदाहरणं ॥ २६८ ॥

व्याख्या–व्याख्यानाद्–विवरणाद्,विशेषोऽर्थविभागो, ज्ञायते–बुध्यते, सर्वेषा-निःशेषाणाम्, अत्र-जिनमते, सूत्राणा–सिद्धान्तवचसां, अविरोधात्–सूत्राविप्रतिपत्त्या, समयज्ञाः–सिद्धान्तविदो, भणन्ति जल्पन्ति, एतस्य पूर्वोक्तवचनस्य अर्थ -वक्ष्यमाणोऽर्थोऽभिधेयम् द्वीन्द्रियादिप्राणान् प्रनीतान्,हत्वा विनाश्य,अत्र

ननु 'कोऽत्र दृष्टान्तः' इत्युक्तिमत्युक्तिसम्बद्धगाथात्रयमाह—

खवगरिसिखीरीनाएण भणसि अह गुणिजणे भवे एयं ।
गुणवंतमगुणवंतं जाणइ ननु केवली सम्मं ॥ २७१ ॥

अहरुत्तरवासावास कज्जट्ठियसाहुजुयलनाएण ।
इयराण पुण निच्छयववहारनएहिं ववहरण ॥२७२॥

निच्छयनएण हीणेवि सुद्धभावाउ निज्जराभागी ।
भणिओ पुव्विं ववहारओ वि लिंगपमाणाउ ॥ २७३ ॥

व्याख्या क्षपकर्षिक्षैरिज्ञातेन- क्षपकर्षिपरमान्नोदाहरणेन, तत्र किल कयाचिदगार्या कस्यचित् क्षपकर्षेर्मासक्षपणपारणके तदर्थं क्षीरीं विधाय यथाऽसौ न लक्षयति तथा दत्ता । क्षपकर्षिणा च सूत्रोपयुक्तेनाशठभावेन गृहीता । भुञ्जानस्य ता शुद्धभावेन केवलमुत्पन्नम्, ततो ज्ञात यथा मदर्थं कृतेति । तस्या अगार्याः प्रभूतो लाभोऽल्पश्च कर्मबन्धो भणितः, तस्माद्बहुलाभे स्तोकहान्या कथ परोक्तदृष्टान्तकथनम् ? ।

पराभिप्रायमाशङ्क्याह—भणसि—जल्पसि, अथेति परावकाशे, गुणिजने प्रधानपात्रे, भवदेव बहुलाभस्तोकहानिलक्षणं फलम् ।

आचार्यः प्राह—गुणवन्त—प्रधानसंयमिनं, अगुणवन्त—तद्विपरीत जानाति—बुध्यते,ननु—अहो पर., केवली—प्रत्यक्षज्ञानी, सम्यग्—अवैपरीत्येन ।

दृष्टान्तमाह—अथउत्तर वर्षावासकार्यस्थितसाधुयुगलज्ञातेन, तत्र प्रागेव 'सव-विणयखवपूए'त्यादिगाथाया कथितम् । तत्र हि लोकेन गुणवान् क्षपकर्षिरवबुद्ध , केवलिना त्वितर. कथित इति । इतराणा- छद्मस्थानां, पुनर्निश्चयव्यवहारनयाभ्यां, व्यवहरणं—आचार । नावेवाह—निश्चयनयेन निश्चयनयाभिप्रायेण, हीनेऽपि गुणतुच्छेऽपि, शुद्धभावात्—प्रशस्तान्त करणात्, निर्जराभागी कर्मह्रासकारको भणित उक्तः।पूर्वं पश्चात् 'निच्छयओ पुण अप्पेवी'त्यादि गाथाव्यवहारतोऽपि द्वितीयन यमतेनापि लिङ्गप्रामाण्यात् वेषप्रतिष्ठातः पञ्चकल्पादिगाथात इति गाथात्रयार्थ• ॥

अभ्युच्चयार्थमाह—

---

[१] पतन्यही पर क ।

परिभ्रमतेहिं सव्वजीवेहिं । गहियाणि य मुक्काणि य, अणंतसो दव्वलिंगाइं ॥'
द्रव्यलिङ्ग चात्र ग्राह्यम्, यदभिन्नग्रन्थीना तेषामेवानन्तद्रव्यलिङ्गसम्भवात् । भि
न्नग्रन्थीना तु, यतून् सम्यक्त्वप्राप्तौ तत्प्रतिपातेऽप्यपार्द्धपुद्गलपरावर्त्तादूर्ध्वं मो-
क्षप्राप्त्या अनन्तद्रव्यलिङ्गप्राप्त्यसम्भवात् । न केवल द्रव्यलिङ्गमफल श्रुतमपि
प्रमादिनामफलमेवेत्याह–चतुर्दशपूर्वधरा –श्रुतकेवलिनोऽपि नानन्तकाये प्रतीते
निवसन्ति–तिष्ठन्ति, पूर्वगतसूत्राभावे सूत्रेति शेष । पूर्वसूत्रे सति पुनर्नेति, यत
उक्त–"उववाओ लंतगम्मि, चोद्दसपुव्विस्स होइ उ जहन्नो । उक्कोसो स-
व्वट्ठे, सिद्धिगमो वा अकम्मस्स" इति गाथार्थ ॥

सूत्रणव विहितसम्बन्धा गाथामाह—

किंचहिगारवसाउ धम्माणुट्ठाणवित्ति सत्थेसु ।
वाहिपडिकिरियतुल्ला दोसगुणेहिं य समणुनेया ॥२८०॥

व्याख्या—किञ्चाभ्युच्चये, अधिकारवशाद्योगिवशात धर्मानुष्ठानप्रवृ-
त्तिः—धुपकरणप्रवर्तन, शास्त्रेषु–ग्रन्थेषु, किंविशिष्टा ? व्याधिप्रतिक्रियातुल्या–रो-
गनिराकरणसदृशा, दोषगुणाभ्यामपकारोपकाराभ्याम्, समनुज्ञेया बोद्धव्या । य-
थाहि, कश्चिद्रोगी सहिष्णु, कश्चिदसहिष्णु, रोगश्च कश्चिदुक्तदोषोऽपरस्तु न
तथा, इत्यादि विभाव्य यस्य यथा गुणो भवति, तस्य तथा चिकित्सा विधीयतेऽ-
न्यथा तु दोष इति । एवमत्रापि साधो सर्वसावद्यनिवृत्तस्यान्यथा कल्प, श्रावक
स्य स्वारम्भप्रवृत्तस्यान्यथा इति । अत. स्थितमिह, श्रावकाणामेकेन्द्रियव्यापादनेपि
प्रभूतो लाभोऽल्पश्च दोषः पात्रदाने, इति गाथार्थ ॥

व्यतिरेकमाह—

एव जइ नो तो परिभणेज्ज कोई इममवि पडिवयण ।
काउण य पाणिवह चेईहरकारयस्सावि ॥ २८१ ॥

व्याख्या—एवमित्थ, यदि, नो नैव, तत , प्रतिभणेत् ब्रूयात्,कोप्येक ,
इममपि वक्ष्यमाणम्, प्रतिवचन–प्रत्युत्तर, कृत्वा–विधाय, प्राणिवध–जीवोपमर्दम्,

चैत्यगृहकारकस्यापि-देवभवनकर्तुरपि, न केवलं यतिदातुरित्यपि शब्दार्थः, इति गाथार्थः ॥

एवं भणनेऽपि पूर्वमतमनुरूपं स्वरूपमाह—

सव्वारंभपयट्टस्स पुत्तमित्ताइकज्जनिरयस्स ।
इय जं जायइ बोही तं नूणं मोहविप्फुरियं ॥२८२॥

व्याख्या—सर्वारम्भप्रवृत्तस्य–निखिलव्यापाररतस्य, पुत्रमित्रादिकार्यनिरतस्य, तत्र पुत्रोऽङ्गरुहो, मित्रं सुहृद्, आदिशब्दाच्छेषस्वजनग्रहः, तेषां कार्यं प्रयोजनं–विवाहादि, रतस्यासक्तस्येति पूर्वोक्तप्रकारेण, यस्माज्जायते भवति, बोधो मत, तस्मान्नूनं–निश्चितं, मोहविस्फुरितम्–अज्ञानविजृम्भितम्, इति गाथार्थः ॥

इत्थं बुद्धे जीवोपदेशमाह—

सव्वाण सुत्ताण जं अविरोहेण होइ वक्खाणं ।
तं कुणसु सया जेण जायइ नो अंतरायं ति ॥२८३॥

व्याख्या–सर्वेषां–समस्तानां, सूत्राणां–सिद्धान्तोक्तवचसां, यद् अविरोधेन–अविप्रतिपत्त्या, भवति जायते, व्याख्यानं–विवरणं, तद्व्याख्यानं, कुरु-विधेहि, सदा–नित्यं, येन–यस्मात्, जायते–भवति, नो–नैव, अन्तरायः—कर्मविशेष, इति वाक्यसमाप्तौ । अयमाशय —चन्दनाङ्गारदृष्टान्तकथनतः स्वमते सूत्रविरोधमपरिभाव्य मुग्धजनदानाकरणे प्रकट एवोक्तः कर्मबन्ध, इति गाथार्थः ॥

## प्राणिवधदानवर्णनं पञ्चत्रिंशोधिकारः ॥

साम्प्रतं षट्त्रिंशमाह—

इय दढ–कलिकाल—वसु–ल्लसतनाणामयाण साहूण ।
एयाण नत्थि चरणं सव्वाण केइ जंपंति ॥ २८४ ॥

व्याख्या—इति प्रोक्तप्रकारेण, दृढो–गाढश्चासौ कलिकालश्च दुःसमालक्षणस्तस्य वश –आयत्तता तेनोल्लसन्ति–वि[illegible]म्भमाणानि नानामतानि–बहुभिप्राया येषां, साधूनां–यतीनां, एतेषां पूर्वोक्तानाम्, नास्ति न विद्यते, चरण–

चारित्रम्, सर्व्वेषा-समस्तानां, केप्येक, जल्पन्ति वदन्ति, इति गाथार्थः ॥

तन्मतं निराकुर्वन् गाथामाह—

न कहिंपि जे दीसइ सपुण्ण लक्खण चरित्तस्स ।
एयंपि नेव जुज्जइ धम्मत्थीण जओ भणिय ॥२८५॥

व्याख्या—न-नैव, कुत्रापि कस्मिन्नपि, येन-यस्मात्, दृश्यतेऽवलोक्यते, सम्पूर्ण-नि शेष, लक्षणं-चिह्न, 'मग्गणुसारी सद्धो, पन्नवणिज्जो कियावरोचेव गुणरागी सक्कारम्भसंगओ तहयचारित्ति" इत्यादि रूप चारित्रिणा-शीलवत, तदपि पूर्वोक्तं नैव न च,युज्यते-घटते,भणितुमिति शेष । धर्मार्थिना-तृपप्रयोजनाना, यतो-यस्माद्भणितमुक्तमागमे इति शेष', इति गाथार्थ. ॥

तदेवाह—

अइयारबहुलयाए संपइ काले न विज्जइ चरित्त ।
न न जओ सावेक्खाए एत्थ समाही विणिद्दिट्ठो ॥२८६॥

व्याख्या—अतिचारबहुलतया-प्रचुरमालिन्ये, सम्प्रति-वर्त्तमाने काले समयादिरूप, न-नैव, विद्यतेऽस्ति, चारित्र शील, तत्परोक्त, नेति-निषेधे,यतो-यस्मात्सापेक्षस्तत्स्पृहोऽत्र-चारित्रसत्तायां परिणाम इति शेष ,समाधिरुत्तर ,विनिर्दिष्ट कथित , अयमाशय.-यस्य षड्जीवरक्षणपरिणामो विद्यते, तस्य चारित्रमस्ति । तथा चोक्त निशीथे-

"जा संजमया जीवेसु, ताव मूलगुणउत्तरगुणा य । इत्तरिय छयसयम, नियडवउसा य पडिसेवी" अस्य व्याख्या तच्चूर्णौच—" भूएसु—छसु जीवनिकाएसु, जाव संयमया लब्भइ, ताव दोण्ह ति मूलुत्तरगुणाण अणुसज्जणा, जाव मूलुत्तरगुणा लब्भति ताव इत्तरिसामाइयसजमस्स छेओवट्ठावणियस्स य अणुसज्जणा लब्भइ । जाव य दो संजमा लब्भति, ताव बउसनियठो पडिसेवणानियठो य अणुस जति ।" तम्हा नो सुत्त पयत्तण न वा य चरित्ती,न वा मूलुत्तरसेवाए सज्ज चारित्ताउ भंसो भवइ । मूले दो दिट्ठता दिइउसगढ न उत्तरगुणां वि

दसेयव्वा, उत्तर-मद्दवदिट्ठंतो । एत्थवि-मूलगुणे भणंति य गुरवो-एक्कव्वयभंगे सव्वव्वयभंगो, एस निच्छउ । ववहारस्स पुणो जमेव एक्कं भग्गं, एकभंगे य कमेण चारित्त गलइ " इत्यादि ।

यच्च पूर्वं चारित्र केषुचिदधिकारेषु भणितं, तत्प्रस्तावादत्र तु मुख्यवृत्त्येति न पुनरुक्तशङ्का कार्या । एवमेव अन्येष्वपि केषुचिदधिकारेष्वपौनरुक्त्य भावनीयम्, इति गाथार्थः ॥

## चारित्रसत्ताविचारण. षड्त्रिंशोधिकारः ॥

साम्प्रत पूर्वोक्तं निगमयन् सप्तत्रिंशमाह—

किं बहुणा जीव तुमं पुव्वायरणासु रज्जसु ।
सयावि मा अहुणायरणासु अ सिढंते जेणिमं भणिय॥२८७॥

व्याख्या—किमिति-निर्वेदे, बहुना-प्रभूतेन-जल्पितेनेति शेषः, जीवात्मन् ! त्वं-भवान, पूर्वाचरणासु-चिरन्तसामाचारीषु, रज्यस्वाभिष्वङ्ग कुरु, सदापि-नित्यमेव, मेति निषेधे, अधुनाचरणासु-साम्प्रतसामाचारीषु । यत ता सम्यग्विचार्यमाणा विघटन्ते, यथेय साधुचैत्येषु विद्यमानेषु स्थाने स्थाने नूतना पौषधशाला कारापणलक्षणा सामाचारी । तथाह-श्रावकः पौषधादिकं चतुर्षु स्थानेषु करोति, तद्यथा-चैत्यगृहे, साधुसमीपे, पौषधशालाया, स्वगृहे वा । तत्र चैत्ये साधुसमीपे वा करोति, तथावश्यकचूर्ण्यां विस्तरेणेश्वरेतरयोः श्रावकयोरुपवर्णित । यदा तु पौषधशालायां स्वगृहे वा करोति, तदा तदतिदेश कुर्वता भणितः सैव विधिः, नवर तत्र गमन नास्ति । कोऽर्थः? यथा गृहान्निर्गत्य चैत्ये साधुसमीपे वा गम्यते, तथाऽत्र नास्तीति । अतो ज्ञायते, भिन्नस्वरूपा पौषधशाला नास्ति, गृहैकदेश एव सा भवति । यत्तु व्यवहारवाक्य " रायसुयाई पचवि पोसहसालाए समिलियत्ति" तदाचरितवाक्यमेकदा जातम्, प्रतीत च व्यवहारविदा । येन कारणेन जात भवतु वाऽऽचरणत एतद्रूपा पौषधशाला । तथापि-व्यभिचरति, भवति साधुचैत्ये पौषधशालायां गृहे वा पौषधादिकं क्रियते । उभयो-

रपि मनयोरात्रयकचूर्णिसत्कमिदमुक्तं—" सच्चेव विही, नवरि नत्थ गमणं न त्थि ।" तथा " असइ साहुचेइयाण पोसहसालाए सगिहे वि सामाइयं आवस्सयं वा करेइत्ति" अस्यार्थस्य साधकानि बहूनि भगवतीसूत्राणि विद्यन्ते, तद्यथा-"समणोवासगस्सण भंते सामाइअकडस्स समणोवासए अच्छमाणस्स केइ भंड अवहरेज्जा ?" तथा—"समणो वासगस्सण भंते सामाइयकडस्स समणोवासए अच्छमाणस्स केइ जाय करेज्जा ? " तथा— ' समणो वासगस्सण भंते ! सामाइयकडस्स समणोवासए अच्छमाणस्स, किं इरियावहिया किरिया कज्जइ ? संपराइया किरिया कज्जइ ?" इत्यादिषु पुनर्भगवतीउत्तराणि वाच्यानि । तस्मात्छद्मस्थचैत्ययोरभावे पौषधशालादौ श्रावकादीनां पौषधादिक कर्तुं युज्यते, तत्करणं च कनचित्कारणेन श्रद्धातु युज्यते, अन्यथैत्थं प्रकटसिद्धान्तवाक्यानामकरणे स्फुटतरमागमविलेपः कुतो भवति।

यदि पुनरेवं कश्चित्स्वाग्रही भणिष्यति, यदुत—न सन्ति शोभनाः साध्वादयस्तत कथं तत्समीपे करोमि पौषधादिकं? स एव वाच्यः-येऽप्ययकाला पक्षया विशिष्टसामाचारीकास्तेषां समीपे कार्यम्, तदभावेऽन्येषाम् । श्राविकाभिरप्येवं कार्यं साध्वीसमीपे। यदि त्वेवं वदति, न कोऽप्यस्ति साध्वादिः सोऽनया गाथया बोद्धव्यः—

जो भणइ नत्थि धम्मो नय सामाइय न चेव य वयाइं ।

सो सव्वसंघबज्झो कायव्वो होइ संघेण ॥ २८८ ॥ इत्यादि ।

किं चास्माभि पूर्वं सम्यक्त्वज्ञानचारित्राण्यागमयन्ते प्रसाधितानि, तेभ्योऽपि श्रद्धातव्य, भवभीरूभिर्गुणवत्त्व साधूनामपीपाय । तस्मात् स्थितमिदं—साधुचैत्यसत्ताया नूतनपौषधशालाकरणसामाचारी भणितयुक्त्या विघटते, सिद्धान्ते-आगमे, येनेत्थ वक्ष्यमाणं भणितमुक्त श्रुतकेवलिना, इत्यर्थं ॥

तदेवाह—

आयरियपरंपरएण आगयं जो उ आणुपुव्वीए ।

कोवेइ छेयवाई जमालिनासं स नस्सिहिही ॥ २८९ ॥

व्याख्या—आचार्यपरपरया—सूरिसन्तानेनागतनामायाता सामाचारी-मिति शेष , यः पुनरनिदहननामा, आनुपूर्व्या क्रमेण, कोपयति -अन्यथा कुरुते, उत्कटी--पण्डितमन्यो, जमालिनाश्च प्रतीत, स विकोपको, नडक्ष्यति- ससारे यास्यतीति तात्पर्यप, इति गाथार्थः ॥

अभ्युच्चयमाह—

धम्मत्थीण चरणुज्जयाण विन्नायसमयसाराण ।
सामाचारी नो चलइ पुव्वसूरीण उ कयाइ ॥ २०० ॥

व्या० प्रकटार्था—

पुनरेव धर्मार्थिनामुपदेश मयच्छन्नपायदर्शनगर्भ गाथाद्वयमाह—

ज नत्थि आगममी न य आयरियं तु पुव्वसूरीहि ।
समइए मोहण पि हु देसनाण टम भणिय ॥ २०१ ॥

विगईकारणमी जो उ पहविज्ज अन्नहा धम्म ।
सो होज्ज अहाछदो तव्वयण नेय सोयव्व ॥ २०२ ॥

प्रतीतार्थे, नवरं–यथा–यथाछन्दत्वं भवति, तथा प्रथमेऽधिकारे " त न पन्नवेइ " इत्यादिना भावितम्, इति ॥

अत्रापि जीवोपदेशमाह—

इयलोयपारलोइयसुहाण जइ जीव ! त सि अहिलासी ।
निउण निम्मविऊण ता जयह तुज्झ उवएसो ॥ २०३ ॥

सुबोधा ।

## इत्याचरणवर्णन सप्तत्रिंशोऽधिकार ॥

अष्टात्रिंशमाह—

रे जीव किंच जेसिं ताण सुय इय मय चहुपयार ।
तेसिं पि [illegible] सु जइ मज्झत्थ मणे धरसु ॥ २०४ ॥

व्याख्या— रे जीव–भो आत्मन् ! किञ्चापरं, येषामनिर्दिष्टनाम्नाम्, त्व गा–भवता, श्रुतमाकर्णितम्, इतीत्थ, मतमभिप्राय', बहुप्रकारं–नानाभेदं, तेषामपि न केवलम् यथाविन्यपि शब्दार्थं । गुणान्—क्षान्त्यादीन्, श्लाघय–वर्णय, यदि माध्यस्थ रागाद्यभाव., मनसि–चित्ते, धारयसि–धत्से, अन्यथा तन्मतदूषणतो म त्सर एव स्फुट' स्याद्, इति गाथार्थः ॥

तद्गुणश्लाघामेवाह —

धन्ना मुणीण किरिय कुणंति धारंति मलिणवत्थे उ ।
परियज्जिअ–दव्वज्जण–ववहारा वारियारंभा ॥ २९५ ॥

व्याख्या—धन्या –पुण्यभाज', ' एते मत्यक्षाः साधवो वर्तन्ते ' इति । क्रियाध्याहार । यदित्यिाह–मुनीना–साधूना, क्रिया–प्रत्युपेक्षणादिका, कुर्व न्ति–चेष्टन्ते, धारयन्ति–पुनर्बिभ्रति मलिनवस्त्रान्, तु पुनरर्थे योजित एव, परीति–सामस्त्येन वर्जितस्त्यक्तो द्रव्यार्जनाय यद्द्रविणार्थ व्यवहारो -वाणिज्या दिको यैस्ते, तथा वारितारम्भा निषिद्धगृहकरणादिपापक्रिया , इति गाथार्थः ।

प्रकृतमस्त्र्था गाथामाह—

अन्नेसिपि य ससमु विमलगुणो जेण जीव तुह होइ ।
फलिय वुज्जलतरय पमोयकरणा उ सम्मत्त ॥ २९६ ॥

व्याख्या—अन्येषामपि पूर्वव्यतिरिक्ताना, प्रशम श्लाघय, विमलगुणा नतिचारादिगुणान् येन, जीव–प्राणिन् ! तव–भवतो, भवति जायते, स्फटिक इव -रत्नविशेष, मकार पूर्ववत्, उज्वलतरकर्मातिशयनिर्मल, प्रमोदकरणात् गुणवत्प्रीत सम्यक्त्व दर्शनम्, इति गाथार्थ ॥

विमलगुणप्रशसामेव गाथा नवकेनाह—

जीवंतु चिर एए पवयणी परिएक्ककयचित्ता ।
जेहिं पगासिव्व आगमसरस्स गाहत्तण पत्त ॥ २९७ ॥

एसो सो धम्मकही अणेयमंगलहियम
जस्स वयणारविंदे भमरव्व ... भट्ट

एसो परवाइगइंदकुंभनिद्दलणकेसरिकिसोरो ।
सलहिज्जइ सूरी दंसणस्स तिलउ महाभागो ॥ २९९ ॥

विप्फुरइ जस्स वयणम्मि भारइ नद्दियव्व कव्वंमि ।
ललियपयसारसिंगारसुंदराकत्ति सो धन्नो ॥ ३०० ॥

एगंतरोववासाइगुरुयतवतवियतणुयदेहस्स ।
एयस्स चेव जम्मो कम्म-महासत्तुसूरस्स ॥ ३०१ ॥

परसमयविहाडणतक्कगंथपरमत्थकहणसोंडीरो ।
स कयत्थो जस्स मई वन्निज्जइ विउसलोएहिं ॥ ३०२ ॥

एसो समत्थदंसण—पभावणागुणमईहिं संजुत्तो ।
रयणायरोव्व रेहइ सयय अक्खलियमाहप्पो ॥ ३०३ ॥

कप्पद्दुमव्व वियरंति जे उ सयस्स कप्पियत्थे उ ।
अणवरय ते धन्ना सुसावया दंसणुद्धरणा ॥३०४॥

किं बहुणा सव्वेसिं जियाण भलहेसु गुणगुण ।
जीव तुज्झ वएसो एसो जइ मज्झत्थं पिय तुज्झ ॥३०५॥

व्याख्या प्रकटार्था, नवरं प्रथमगाथया आगमधरगुणो वर्णितः, द्वितीयया धर्मकथकस्य, तृतीयया वादिनः, चतुर्थ्या० कवे, पञ्चम्या तपस्विनः, षष्ठ्या तर्कग्रन्थव्याख्यातु', सप्तम्या समस्तगुणवतां, अष्टम्या श्रावकाणां, नवम्या समस्तजीवाना,नैमित्तिकविद्यासिद्धा साम्प्रतं प्रायो न सन्तीति तद्गुणगाथा न कृता।

## गुणस्तुतिविचारोऽष्टात्रिंशोऽधिकार ॥

साम्प्रतं प्रकरणसारमुपदेश दातुकाम आह—

तह कुणसु तहा चिट्ठसु तह धम्म पन्नवेसु रे जीव ।।
जह रागदोसवेराण निग्गहो होइ नियमेण ॥ ३०६ ॥

स्फुटाऽभिप्रेया, नवर चिद्दवृत्ति-तिष्ठ, ग्रामादौ निवासं विधेहि ॥

साम्प्रत प्रकरणमिदमुपसहरन् येषा यादृशादुपदेशादिद विहित, यथा हेतु तथा यैर्यच्छिर्ष्यैर्यन्नामक प्रकरण यादृश यैश्च यादृशै. शोधितं, येषा च यादृशानां सम्मतमिदमन्यैश्च यादृग्विधै. शोधनीयमित्यर्थवेदक गाथाचतुष्टयमाह—

इय सिरिसिद्धतमहोयहीण सिरिनेमिचदसूरीण ।
उवएसाउ मज्झत्थयाए सिरिदेवसूरीहिं ॥३०७॥

सिरिवीरचंदसूरीण सिस्समित्तेहि विरइय ।
एय सिद्धतजुत्तिजुत्त जीवस्सणुसासण विमल ॥३०८॥

तह सयलागमपरमत्थ-कणयकसवट्टलद्धउवमेहिं ।
सयलगुणरयणरोहणगिरीहिं जिणदत्तसूरीहिं ॥३०९॥

सोहियमेय अन्नेहि सूरिपवराण समय किच ।
ज एत्थ अणागमिय त गीयत्था विसोहंतु ॥३१०॥

व्याख्या-इति-प्रकरणसमाप्तौ, श्रीसिद्धा तमहोदधीना-शोभनागम बृहत्समुद्राणा, श्रीनेमिचन्द्रसूरीणा एतन्नाम्ना श्रीमदुत्तराध्ययनलघुवृत्ति वीरचरित रत्नचूडादिशास्त्रकर्तॄणां बृहद्गच्छशिरोमणीना, निष्कलङ्क सिद्धा तव्याख्यानामृतप्रपादर्शिणामिति, यावदुपदेशात्-व्याख्यानशिक्षातो, म ध्यस्थतया रागाद्यभावत्वत, श्रीदेवसूरिभि श्रीवीरचन्द्रसूरीणा निजदेशना धवलत्वनिर्मलकीर्तीना, शिष्यमात्रैर्विनेयगणेषद्गुणे, विरचित दृब्धम, एत-दिदम सिद्धा तयुक्तियुक्त-राद्धा तयुक्तिमहितम, जीवस्यात्मनो भव्यस्य चानुशा-सन बोधकम, विमल-निर्मलम। तथेति किञ्च, सकलागमपरमार्थकनकक्षप पट्टलब्धोपमै -नि दोषसिद्धा ततत्त्वचामीकरतत्परीक्षादक्षोपलप्राप्तोपमानै, सक लगुणरत्नरोहणगिरिभिर्निखिलगुणमाणिक्यरोहणशैलैर्जिनदत्तसूरिभि एत

श्रावकैः सप्तनिगृहनिवासिभिरिति यावत्, शोधितं-निर्दोषं कृतम्,एतज्जीवानुशासनं, अन्येषां महेन्द्रसूरिप्रमुखानां सूरिप्रवराणामाचार्यवर्याणां सम्मतमभिप्रेतम्, । किञ्चापरम्-यदत्रप्रकरणे अनागमिकमुत्सूत्रं, तद्गीतार्थाः-सिद्धान्तविदः, शोधयन्तु-निर्मलीकुर्वन्तु, इति गाथा चतुष्टयार्थः ॥

साम्प्रतमस्य प्रकरणस्य सोपमानं कार्यं दर्शयन्नाह—

सुहबोहकमलसडाण सूरबिंबं व मोहग्ण कुणइ ।
पयरणमिणमो इयराण न उण पूयाण वसहा वा ॥३११॥

व्या—प्रतीतार्था ।

एतत्प्रकरणपाठादौ भव्यानां यत्स्यात्, तद्गाथात्रयेणोपदेशगर्भमाह—

मज्झत्थभावणाए पढंति चिंतंति जे उ एयत्थं ।
ते रागदोसवेरीण निग्गहं कुणहि हेलाए ॥३१२॥

तह कुगहरेणुमुक्कं दंसणरयणं तु जायए विमलं ।
तन्निग्गहाउ दंसण-सुद्धीउ जायए धम्मो ॥३१३॥

धम्माउ मोक्खसोक्खं अखंडं जायए जणाणेत्थ ।
जइ एयत्थी तो पयरणे कुणह संगाहं ॥३१४॥

एता अपि सुगमाः ॥

साम्प्रतमस्य प्रकरणस्याशीर्वादमाह–

जाव जिणसासणमिणं एयं जीवाणुसासणं ताव ।
नंदउ लोए सिद्धंत-जुत्तिसारं कुमयहरणं ॥३१५॥

व्या० प्रतीतार्था ॥

येनाभिप्रायेणेदं प्रकरणं कर्त्रा कृतं, तमाविष्कुर्वन्नाह–

पंडित्तणाभिमाणेण विरइयं नेय किंतु इय बोहो ।
धम्मरयपुव्वसूरीण चिट्ठिए जंति जइ जीवा ३१६॥

इयमपि तथैव ।

अधुना यावन्तोऽत्र ग्रन्थतः प्रकरणार्थाधिकारा यन्नामधेयास्तान् संगृह्य गाथापञ्चकेन स्मृत्यर्थमाह–

चियपट्टट्ठा१पासत्थनमण२पडिक्कमण३वंदणं४नंदी ५ ।
ठाणनिसेहो६तव माल७पडिम८अविहीअणुट्ठाणं ९ ॥३१७॥

सिद्धबलि१०पढमपासत्थ११चेइयविहि१२सूरि१३सघनिंद च १४ ।
पासत्थखेत्त१५नाणइढनिंद१६गुरुगच्छ१७चाग च १८ ॥३१८॥

थुभाइपूय१९उस्सग्गपढण२०पलहीण२१अविहिगमण च २२ ।
मलनिंद२३सड्ढियनच्चाण२४सड्ढनमण२५च उलग्ग २६॥३१९॥

मजाइकप्पण२७जिणकुसुमपूय२८सुद्धगाह च२९नरनिंदा ३० ।
घइचेइ३१मिच्छ३२अपमाणवेस३३असजया३४ ॥३२०॥

पाणे३५चारित्तसत्त३६आयरण३७गुणथुइ३८एग होंति ।
अडतीसा अहिगाराउ इमम्मी जीवस्स गुणाणुसासणे विमले॥३२१

एतदर्थश्च पूर्वोक्ताधिकारतो ज्ञेय ।

स्वमतिविकल्पितमिदं प्रकरणमिति मुग्धमतेस्सन्देहः स्यात्तन्निराकरणार्थमाह–

समईए एत्थ नो किंपि किन्तु जं दिट्ठ कप्पववहारे ।
पचकप्पे निसीहे दसासुए पयरणाईसु ।३२२॥

व्याख्या–स्वमत्या–निजधिषणया, प्रकरणे, नो–नैव, किमपि स्तोक, किंतु–तत्स्व, यत् दृष्टमवलोकितं, केषु? इत्याह–कल्पव्यवहारे एतन्नामच्छेदग्रन्थद्वये, पञ्चकल्पनिशीथे एतदभिधानछेदग्रन्थयुगे, दशाश्रुते–दशाश्रुतस्कन्धनाम च्छेदग्रन्थे, प्रकरणादिषु–पञ्चाशकोपदेशमालाष्टकादिषु आदिशब्दादाचारा [illegible] तद्ग्रथितमिति शेष, इति गाथार्थ ॥

प्रकारान्तरेण निजनाम कथयन् प्रकरणसङ्ख्या चाह–

देसवसुसूररीसाहिंसाई वन्नकहियनामेहिं ।
पयरणमिणमो रइय तेवीसातिन्निसयगाहं ॥३२३॥

व्याख्या–देस, वसु, सूर, रीसा हिंसालक्षणा ये शब्दाः, तेषु ये आदि वर्णाः–प्रथमाक्षराणि, तैः कथित–प्रतिपादितं, नामाभिधेयं येषां ते तथा तैः, प्राकृतभाषया देवसूरीहिं इत्यर्थः । प्रकरणं ग्रन्थसन्दर्भम्,इद प्रत्यक्षं, च इति निपातः पूरणार्थौ, रचितं–ग्रथित, कियत्प्रमाण ? ( ३२३ ) त्रयोविंशत्यधिकत्रिशतगाथमिति गाथार्थः ॥

क नगरादौ विरचितमित्याह–

अणहिल्लवाडनयरे जयसिंहनरेसम्मि विज्जते ।
दोहट्टिवसहिट्टिएहिं वासट्ठी–सुर–नवमीए ॥

व्याख्या–अणहिल्लपाटनगरे–श्रीगुर्जरराजधान्या, जयसिंहनरेश्वरे––श्रीकर्णदेवराजसूनौ, विद्यमाने सति, दोहट्टिनामश्रावकवसतिस्थितैः, द्वाषष्टे संवत्सरे, एकादशशतोपरिष्टादिति शेषः, सूरेणादित्यवारेण, नवमी तिथिलक्षणा, तस्यां रचितमिति पूर्वगाथोक्तक्रियासम्बन्धाद्, इति गाथार्थः ॥

॥ समाप्तेयं जीवानुशासनवृत्ति ॥

एतस्य वृत्तिकरणे, पुण्य यदुपार्जित मयका ॥
तेन सुखितोऽस्तु भव्यलोकः कुग्राहवियोगतो नित्यम् ॥१॥

मासेनैकेनेय, सरस्वतीतोपत. कृता वृत्तिः ।
अणहिल्लपाटकनगरे, विजयिनि जयसिंहनृपे ॥२॥

दोहटिवसतिवासे, श्रेष्टिश्रीजासकस्य ९.
तदुपष्टम्भादपरं च श्राविकायाः वसुन्धर्याः

वीरादिपुत्रमातुर्नित्य जिनसाधुपूजनरतायाः
श्रीदेवसूरिभिरसौ, भव्यजने जाट[illegible] . [illegible]

श्रीमज्जिनेमिचन्द्राख्यसूरिभिः शोधिताद्वृत्तेः
वृत्तिरेषातिगम्भीरसिद्धसिद्धान्तपारगै. ॥५॥

ग्रन्थाग्र श्लोक २२००

